श्रीसोमनाथसंस्कृतविश्वविद्यालय-ई-ग्रन्थमाला-०७

# साहित्यसौरभम्

(साहित्यविषयक-राष्ट्रियपरिसंवादे प्रस्तुतानां शोधलेखानां सङ्ग्रहः)

प्रधानसम्पादकः

**प्रो. (डॉ.) ललितकुमारः पटेलः**

प्र.कुलपतिः, श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्

सम्पादकः

**डॉ. डायालालः एम्. मोकरिया**

सहायकाचार्यः (साहित्यम्)

श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्



श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्

श्रीसोमनाथसंस्कृतविश्वविद्यालय-ई-ग्रन्थमाला-०७

# साहित्यसौरभम्

(साहित्यविषयक-राष्ट्रियपरिसंवादे प्रस्तुतानां शोधलेखानां सङ्ग्रहः)

प्रधानसम्पादकः

**प्रो. (डॉ.) ललितकुमारः पटेलः**

प्र.कुलपतिः, श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्

सम्पादकः

**डॉ. डायालालः एम्. मोकरिया**

सहायकाचार्यः (साहित्यम्)

श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्



श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्

Shree Somnath Sanskrit University E-Grantha Series-07

# SĀHITYASAURABHAM

(Proceeding Volume of National Webinar on Sahitya)

Chief Editor

Prof. (Dr.) Lalitkumar Patel

Vice Chancllor (I/c.),

Shree Somnath Sanskrit University, Veraval

Editor

Dr. Dayalal M. Mokariya

Assistant Professor (Sāhityam)

Shree Somnath Sanskrit University, Veraval



Shree Somnath Sanskrit University,

Veraval

Published by –

**Dr. Dasharath Jadav**
Registrar,
Shree Somnath Sanskrit University,
Rajendra Bhuvan Road, Veraval – 362 266
Dist. Gir-Somnath, Gujarat
Phone – 02876-244532, Fax – 244417
www.sssu.ac.in

Assistant Editor & Co-ordinator –

**Dr. Kartik Pandya**
Research Officer,
Shree Somnath Sanskrit University, Veraval



Edition : First
Year : March-2023
Copies : E-Book in PDF
ISBN : 978-93-83097-55-5
Price : Free
Printed By : Shree Somnath Sanskrit University, Veraval

# शुभाशंसनसौरभम्

**"देवस्य पश्य काव्यं त्वं न ममार न जीर्यति"** इति वेदोक्त्यनुगुणं काव्यं चतुर्वर्गफलप्राप्तये साधनभूतेन स्वीकुर्वन्ति साहित्याचार्याः। तत्र काव्यमिति शब्दः सम्पूर्णसाहित्यसौन्दर्यबोधकः गद्यपद्यसहितसम्पूर्ण-साहित्यपर्यायरूपो वर्तते। काव्यार्थस्य समष्ट्यर्थवत् वर्तते श्रीसोमनाथ-संस्कृतविश्वविद्यालयस्य साहित्यविभागोऽपि। सः प्रतिवर्षं राष्ट्रियान्ताराष्ट्रिय-परिसंवाद-कार्यशाला-सङ्गोष्ठि-काव्यरचनाभ्यास-काव्य-रचनाकौशलवर्गादि-नवनवोन्मेषपरिणामोपेत-शैक्षणिकक्रियाकलापान् साकारीकरोति। तस्मिन्नेव क्रमे २८-१०-२०२० तमे दिनाङ्के साहित्यविभागद्वारा **"प्रादेशिकभाषाणां पद्यसाहित्ये संस्कृतसाहित्यस्य प्रभावः"** विषयमधिकृत्य अन्यतमा आभासीया सङ्गोष्ठी अनुष्ठिताऽऽसीत्। सङ्गोष्ठ्यामस्यां विद्वद्भिः शोधपत्रवाचकैः संशोधकैः गुणवत्तायुक्ताः साहित्यसौरभमयाः विविधाः शोधलेखाः प्रस्तुताः। तेषु समीक्षितानां चितानां पुष्पभूतानां शोधलेखानां सौरभं सर्वत्र प्रसरेत् इति धिया विश्वविद्यालयेन शोधलेखसङ्ग्रहात्मकं ग्रन्थरत्नमिदं **"साहित्यसौरभम्"** इति शीर्षकेण E-bookरूपेण प्रकाशतामानीयते। तत्र संस्कृत-हिन्दी-आङ्ग्लभाषामाध्यमेन प्रस्तुताः विविधाः शोधलेखाः संस्कृतसाहित्यस्य नरसिंह-प्रेमानन्द-रवीन्द्रनाथ-भालण-नाकर-रहीम-

कान्तादीनां प्रादेशिक-साहित्यरचनायां कथावस्तु-भाषा-शैली-रसादि-तत्त्वानुसन्धानपूर्वकं कीदृशः प्रभावो वर्तते इति प्रतिपादयन्ति। अनेन संस्कृतसाहित्येन सार्धं प्रादेशिकसाहित्यसौरभमपि सुज्ञेभ्यः रसिकजनेभ्यः आनन्दानुभूतिं तन्यात्। अनेन ग्रन्थरत्नेन सर्वेषां साहित्याध्ययनरतानां ज्ञानवृद्धिर्भूयादिति भगवद्भुवनभवभयहरस्य हरस्य अनाथनाथस्य भगवतः सोमनाथस्य पादपद्मयोः प्रार्थये ॥

भवदीयः

(प्रो. (डॉ.) ललितकुमारः पटेलः)

प्र.कुलपतिः

# सम्पादकीयम्

**सौराष्ट्रदेशे विशदेऽतिरम्ये ज्योतिर्मयं चन्द्रकलावतंसम्।**
**भक्तिप्रदानाय कृपावतीर्णं तं सोमनाथं शरणं प्रपद्ये॥**

भगवतः सोमनाथस्य कृपया श्रीसोमनाथसंस्कृतविश्वविद्यालयः विविधैः उपक्रमैः गौरवं प्राप्नोति। विश्वविद्यालये नूतनप्रकल्पान् नीत्वा विविधाः राष्ट्रियाः एवम् अन्ताराष्ट्रियाः परिसंवादाः, कार्यशालाः गोष्ठ्यः चेत्यादयः सततं भवन्ति। एते उपक्रमाः आवश्यकतानुसारं आभासीयमाध्यमेन अपि भवन्ति। २८-१०-२०२० तमे दिनाङ्के **प्रादेशिकभाषाणां पद्यसाहित्ये संस्कृतसाहित्यस्य प्रभावः** इति विषयम् आधारीकृत्य आभासीयमाध्यमेन एकः राष्ट्रियस्तरस्य परिसंवादः(वेबिनार) आयोजितः आसीत्। तस्मिन् नैके विद्वांसः नूतनविषयान् स्वीकृत्य स्वशोधपत्राणि प्रस्तुतवन्तः। तेषां शोधपत्राणां समीक्षापि जाता। एतेषां समीक्षितशोधपत्राणां सङ्ग्रहः **साहित्यसौरभ**नाम्ना प्रकाशितो भवति। अयं हर्षस्य विषयो वर्तते। एतैः शोधपत्रैः प्रादेशिकभाषासु संस्कृतस्य कियान् प्रभावः वर्तते तं ज्ञात्वा प्रादेशिकभाषाभिस्सह संस्कृतस्य सम्बन्धं ज्ञातुं शक्नुमः। एतैः शोधपत्रैः संशोधनस्य नूतनाः दिशः उद्घाटिताः भविष्यन्ति। **साहित्यसौरभम्** इति नामकमिदं पुस्तकं संस्कृतसाहित्यस्य सौरभं प्रचारयिष्यति इति मे मतिरस्ति।

श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य माननीयानां प्रभारिकुलपति-वर्याणां प्रो. (डॉ.) ललितकुमार-पटेलमहोदयानां मार्गदर्शनेन, प्रेरणया

अनुमत्या च ग्रन्थोऽयं प्रकाशतामेति, अतः तेषाम् आभारं मन्ये। माननीयैः कुलसचिववर्यैः डॉ.दशरथजादवमहाभागैः प्राशासनीयम् आनुकूल्यं कृतं तदर्थं तान् प्रति अपि कार्तज्ञ्यभावं प्रकटयामि। साहित्यसमुद्रमन्थनं कृत्वा ये विद्वांसः शोधलेखान् प्रस्तुतवन्तः तेषां सर्वेषामपि अस्मै पुस्तकाय ऋणस्वीकारं करोमि। इदं पुस्तकं साहित्यिकानां संशोधकानां भाषाविदुषां ज्ञानपिपासूनाञ्च कृते अवश्यमेव लाभाय भविष्यति। अन्ते पुनः भगवन्तं सोमनाथं प्रणम्य मद्वाग्व्यापाराद् विरमामि।

जयतु सोमनाथः।
जयतु संस्कृतम्।

सम्पादकः

डॉ. डायालालः एम्. मोकरिया
सहायकाचार्यः (साहित्यम्)
श्रीसोमनाथसंस्कृतयुनिवर्सिटी
वेरावलम्

# विषयानुक्रमणिका

# महाभारतप्रभावदृष्ट्या 'वसन्तविजय' इति खण्डकाव्यस्य समीक्षा

प्रो. (डॉ.) ललितकुमारः पटेलः,
प्रभारिकुलपतिः,
श्रीसोमनाथसंस्कृतविश्वविद्यालयः, वेरावलम्

## भूमिका

'खण्डकाव्यं भवेत्काव्यस्यैकदेशानुसारि च' (साहित्यदर्पणः, ६/२६९) इति लक्षणानुसारं संस्कृतखण्डकाव्यं समग्रजीवनखण्डं न निरूपयति, अपि तु एकदेशानुसारि अर्थात् जीवनस्यैकखण्डनिरूपकं भवति। रामायण-महाभारतादिमहाकाव्यानि समग्रदेशकालादिसहितं जीवन-निरूपणं कुर्वन्ति। मेघदूतादिखण्डकाव्यानि कस्यचित् जनस्य जीवनखण्डस्य निरूपणं कुर्वन्ति। खण्डकाव्यं गीतकाव्यम् (Lyric) अपि कथ्यते। गुजरातीखण्डकाव्ये सुश्लिष्टकथागुम्फनम्, समुचितप्रारम्भः, कलात्मकान्तः, रचनाकौशलम्, रसनिरूपणम्, नाट्यात्मकता इत्यादीनि तत्त्वानि आवश्यकानि भवन्ति महाभारतस्थः पाण्डुकरुणकथावस्तु आश्रित्य लिखितं वसन्तविजयमिति मणिशङ्कर रतनजी भट्टः (कान्तः) कृतं सर्वोत्कृष्टं गुजरातीसाहित्यस्य प्रथमं खण्डकाव्यं वर्तते। महाभारतस्थ-पाण्डुकथायाः वसन्तविजयखण्डकाव्ये कथं प्रभावः वर्तते, तस्य समीक्षा शोधपत्रेऽस्मिन् विहिता।

गुजराती भाषायां सर्वप्रथमः पुरस्कर्ता खण्डकाव्यरचयिता वर्तते कान्तः। गुजरातीखण्डकाव्यस्य पिता (जनकः) मन्यते कान्तः। १८६७ तमे ख्रिस्ताब्दे लब्धजन्मा कान्तः प्रसिद्धखण्डकाव्यद्वयं रचयामास- १. वसन्तविजयम्, २. चक्रवाकमिथुनम्। 'कान्त' इति उपनामधारिणः कवेः पूर्णं नाम वर्तते मणिशङ्कर रतनजी भट्टः। 'देवयानी' इति अपूर्णं खण्डकाव्यमपि तेन रचितम्। तस्य खण्डकाव्येषु वसन्तविजयं न केवलं कान्तस्य अपि तु समग्रस्य गुजरातीसाहित्यस्य सर्वाङ्गसम्पूर्णम् उत्तमं खण्डकाव्यं वर्तते। कान्तः महाभारतस्य आदिपर्वणः कथावस्तु (पुरस्कृत्य) पाण्डुजीवनकारुण्यसभरम् अपूर्वं कलासर्जनं कृत्वेदं खण्डकाव्यम् आलेखितवान्। महाभारते आदिपर्वणः

चतुर्विंशत्यधिकशततमेऽध्याये प्रसङ्गोऽयं निरूपितः वर्तते। महाभारते वैशम्पायनवचनात् प्रसङ्गस्यास्य प्रारम्भः भवति तद्यथा-

वैशम्पायन उवाच

दर्शनीयांस्ततः पुत्रान् पाण्डुः पञ्च महावने।
तान् पश्यन् पर्वते रम्ये स्वबाहुबलमाश्रितः ॥
(महा. आदि. १२४ / १)

महाराजः पाण्डुः दर्शनीयान् पञ्चपुत्रान् पश्यन् महावने वासं चकार। तत्र पलाशैः तिलकैः, सहकारैः, चम्पकैः पारिभद्रकैः अन्यैश्च बहुभिः फलपुष्पसमृद्धिभिः वृक्षैः जलस्थानैश्च विविधैः पद्मिनीभिश्च सुशोभितं वनं सम्प्रेक्ष्य पाण्डोः मनसि कामसञ्चारः समुत्पन्नः। वने विहरन्तं विचरन्तं तं (पाण्डुं) शुभं वसनं विभ्रती माद्री अनुजगाम। युवावस्थां तां माद्रीं समीक्षमाणः सः पाण्डुः कामाग्निना प्रज्वलितः। रहसि राजीवलोचनां माद्रीं दृष्ट्वा कामवशीकृतः सः राजा कामं नियन्तुं न शक्तवान्। बलात् राजा तां (माद्रीं) निजग्राह। यथाबलं राज्ञी माद्री वारं वारं निवारवती। कामपरीतात्मा सः मृगरूपधारिणः मुनेः तं शापं न स्मृतवान्। विधिना सम्प्रचोदितः (प्रेरितः) सः शापभयम् उत्सृज्य जीवितान्ताय मन्मथस्य वशं गतः उक्तं च-

पलाशैस्तिलकैश्चतैश्चम्पकैः पारिभद्रकैः।
अन्यैश्च बहुभिर्वृक्षैः फलपुष्पसमृद्धिभिः ॥

जलस्थानैश्च विविधैः पद्मिनीभिश्च शोभितम्।
पाण्डोर्वनं तत् सम्प्रेक्ष्य प्रजज्ञे हृदि मन्मथः ॥
(महा. आदि. १२४/३-४)

मनोरमप्रकृतिदर्शनेन मनसि समुत्पन्नाः शृङ्गारावेगाः बलवत्तराः भवन्ति। वनशोभां दृष्ट्वैव पाण्डोः मनसि कामसञ्चारः जातः, तथैव आलेखति कान्तः अपि। तद्यथा-

"કંસારી તમરાંઓના અવાજો આવતા હતા,
સ્થળ કાલ છતાં શાંત બંનેને ભાવતા હતા !
વહે ઠંડો વાયુ કરી દઈ બધે શાંતિ વનમાં,
ઘણાં થોડા આજે ઉડુગણ પ્રકાશે ગગનમાં,
હજી એકે પ્રાણી ગિરિ મહીં મહીં જાગ્રત દીસે,
વધે અંધારામાં નરવર અગાડી વન વિશે."

अत्र कान्तस्य वनवर्णनं मनोरम्यत्वेन सहितं नितान्तं जनरहितत्वमपि सूचयति। महाभारतकारः मनःस्थितिं न वर्णयति महाकाव्यगौरवभयात् इति मन्ये, किन्तु खण्डकाव्यलक्षणम् अनुसृत्य पाण्डोः भावानपि (चित्तावस्थामपि) निरूपयति। तद्यथा-

ઝાંખી ભરવી જળની સ્થિરતા જણાય,
જોતાં જ તર્ક નૃપના કયહીયે તણાય,
બેસે શિલા ઉપર ચાલી સચિંત રાય,
ઊંડા વિચાર મહીં છેવટે મગ્ન થાય."

पुनः प्रकृतिवर्णनपूर्वकं काव्यं विशदयति कान्तः-

"થવા માંડ્યા ત્યાં તો રવિ ઉદયનાં ચિહ્ન સઘળે,
ઉકેલી સૃષ્ટિના વિષમ સ્વર સાથે સહુ મળે."

एवम् आदौ प्रकृत्या उदीप्ताः शृङ्गारीभावाः उत्तरोत्तरं माद्रीविलासं दृष्ट्वा ततः वल्कलधारिणीं माद्रीं वीक्ष्य बलवत्तराः अभवन् पाण्डोः इति योजनापूर्वकं कलात्मकशैल्या वर्णयति कान्तः। व्यासस्य एकान्तवर्णनस्य अपेक्षया कान्तस्य एकान्तवर्णनं दीर्घत्वं प्राप्नोति यथा व्यासवचनम्-

इहस्येकां तु तां दृष्ट्वा राजा राजीवलोचनाम्।
न शशाक नियन्तुं तं कामं कामवशीकृतः॥
(महा.आदि.-१२४/७)

तद्वदेव वर्णनं शब्दान्तरेणात्र-

"નથી શું કુંતાજી ? નહિ અરર આહીં રહી શકે,
પ્રિયે ! તું એકાકી ? સ્વપ્ન વિણ વૃત્તિ ક્યમ ટકે ?
ખરે ત્યારે અનુભવ જરા આજ કરીજો,
જરા આ પાસેના ઉપવન વિશે કોઈ ફરીએ."

स तु कामपरीतात्मा तं शापं नान्वबुध्यत।
माद्री मैथुनधर्मेण सोऽन्वगच्छद् बलादिव ॥

जीवितान्ताय कौरव्य मन्मथस्य वशं गतः।
शापजं भयमुत्सृज्य विधिना सम्प्रचोदितः ॥
(महा. आदि. १२४/९-१०)

तस्य कामात्मनः राज्ञः बुद्धिः साक्षात् कालेन मोहिता। इन्द्रियग्रामं सम्प्रमथ्य चेतसा सह बुद्धिः नष्टा जाता। भार्यया माद्रया सह संगम्य कुरुनन्दनः परमधर्मात्मा महाराजः पाण्डुः कालधर्मणा युयुजे। ततः गतचेतसं राजानं समालिङ्ग्य माद्री दुःखजं शब्दं मुमोच। पुत्रैः सह कुन्ती तत्राजग्मुः यत्र राजा तथागतः बभूव। पुत्रान् तत्रैवावधाय शोकातुरा शोकपरीताङ्गी कुन्ती विललाप। सा माद्रीम् उक्तवती यत् शापं जानन् वनौकसः कथं त्वां अतिक्रान्तः ? विजने त्वं नराधिपं कथं लोभितवती ? त्वाम् एकान्ते प्राप्य कथं शापं विचिन्तयतः तस्य प्रहर्षः समजायत ? माद्री उक्तवती यत् हे देवि ! विलपन्त्या मया राजा वारितः, किन्तु दिष्टं सत्यं चिकीर्षुणा अनेन राज्ञा आत्मा न वारितः। ततः कुन्ती वीरपत्नीत्वमर्थये उक्तवती तदा माद्री 'अहमेव भर्तारम् अनुयास्यामि' इति उक्त्वा तथा कृतवती।

**महाभारतस्य प्रभावः**

वसन्तविजयस्य कथावस्तु कान्तेन महाभारतस्य आदिपर्वणः पुरस्कृतम्। "शापजं भयमुत्सृज्य विधिना सम्प्रचोदितः" इत्येव कथनं स्वीकृत्य 'विधेः सत्ता सर्वत्र प्रवर्तते' (धार्युं तो धणीनुं ज थाय) इति प्रतिपादयति कान्तः स्वकीये वसन्तविजयकाव्ये। विधिवशादेव पाण्डुः निःसहायः भूत्वा प्रणयसुखं प्राप्तुं नार्हति। अन्ते तु वसन्तस्य विजयः भवति। कान्तः महाभारतस्य कथावस्तु

स्वीकृत्य नाट्यात्मकशैल्या शब्दचित्रं प्रस्तौति- महाभारतकारेण 'शापजं भयम् उत्सृज्य' इति उक्त्वा यः शापप्रसङ्गः उल्लिखितः, सः प्रसङ्गः पाण्डुस्वप्नरूपेण उल्लिख्य कान्तः सहस्रसंवत्सरपूर्वघटनां भावकेभ्यः शब्दचित्रत्वेन प्रस्तौति। मूलकथानुसारं मृगयार्थं वने गतः पाण्डुः मृग-मृगीरूपेण (किन्दममुनिः तथा च पत्नी) रतिक्रीडामग्नं मुनियुगलं बाणेन हतवान्। मुनियुगलं मूलस्वरूपं प्राप्य पाण्डुं शशाप, यत् 'यस्यामवस्थायाम् आवां मृतौ तस्यामेवावस्थायां त्वं मृत्युम् अवाप्स्यसि। ततः तापसजीवनमापनाय सः शापितः सन् माद्रया कुन्त्या च सह वनं जगाम इति मूलकथाम् अदर्शयन् साक्षात् विषयप्रवेशं करोति कान्तः तद्यथा-

‘નહિ નાથ ! નહિ નાથ ! ન જાણો કે સવાર છે !<br>
આ બધુ ઘોર અંધારું હજી તો બહુ વાર છે.'

अत्र महाभारतस्य महाकाव्यत्वं नाट्यात्मकरीत्या समागतं दृश्यते। महाभारतवदत्रापि अनुष्टुब्छन्दसा प्रारम्भः भवति अस्य खण्डकाव्यस्य। एवम् आरम्भेऽपि महाभारतप्रभावः दृश्यते। ततः दुःस्वप्नवशात् शयितुम् अशक्तः राजा पाण्डुः उद्विग्नः सन् अटितुं बहिप्रदेशं विचरति-

'ખુલ્લા પ્રદેશ પર જૈ ફ્રસ થોડી વાર,<br>
ઊઠ્યો નરેન્દ્ર મનમાં કરી એ વિચાર.'

प्रकृतिवर्णनेऽपि महाभारतस्य प्रभावः वरीवर्त्ति वसन्तविजयः। यद्यपि महाभारतकारेण श्लोकद्वये प्रकृतिवर्णनं कृतं वर्तते। तद्यथा-

'शापजं भयम् उत्सृज्य' इति वेदव्यासवचनेन विलक्षणतया स्वकाव्यरचनया प्रस्तौति कान्तः। तद्यथा-

"પ્રસંગ બદલાતાં એ સિદ્ધાન્ત વીસરી ગયો,<br>
મટી તાપસ એ પાછો ભર્તા-સ્વામી-ખરે થયો."

'वसन्तप्रभावेन पाण्डुः अनौकसत्वं विहाय पुनः भर्ता-स्वामी बभूव' इति तात्पर्यं प्रतिपादयति गुजरातीश्लोकेनानेन कान्तवर्यः। "सम्प्रमथ्येन्द्रियग्रामं प्रणष्टा सह चेतसा" इति व्यासवचनस्य विस्तारः अकारि इत्थम्-

"પ્રિયે ! માદ્રી ! આહા ! સહન મુજથી આ નથી થતું,
નહીં મારે જોઇએ તપફળ, ભલે એ સહુ જતું,
ચલાવી દે પાછી મધુર સ્વરની રમ્યસરિતા,
છત્રથી છોડી દે ! અર ર ર ! ક્યમ રાખે નિયમિતા ?"

'माद्रीविलास' इति कान्तस्य नूतना कविकल्पना वर्तते। इदं वर्णनं कान्तेन सहेतुकं विहितं यतो हि भूतकाले पाण्डुः राजा माद्रया सह अत्र गिरिप्रदेशं समागत्य भोगविलासं करोति स्म। शृङ्गारभावाः अधिकाः पाण्डोः मनसि भवेयुः इति कारणेन माद्रीविलासाभिनिवेशः।

"જ્યાં જવું હતું તે આવ્યું સર સુંદર પાસનું,
આપ્યું હતું પુરા જેને નામ 'માદ્રીવિલાસ'નું."

तस्य कामात्मनो बुद्धिः साक्षात् कालेन मोहिता इति श्लोकेन महाभारतकारः पाण्डोः कामदशावर्णनं विदधाति। शापवशात् अनौकसः (अरण्यवासी) राजा योगत्वस्य स्थाने अन्धत्वं प्राप्नोति। तस्य वसन्तविलासवर्णनं यथा-

"ઉઠી જોતાં શોભા બહુ જ બદલાયેન નીરથી,
ડગ્યું પાછું ધૈર્ય, સ્મરણ મહીં આવી પ્રિય સખી,
નિહાળું છું શું હું મનહર વસંત પ્રસરને ?
અરે રે ! શેની શી અનુભવ કરું છું અસર એ?
સૃષ્ટિસૌન્દર્યને જોતાં કૈં રોમાંચ થયું હતું,
ઘણા દિવસનું પેલું યોગાંધત્વ ગયું હતું."

"प्रहृष्टमनसं तत्र विचरन्तं यथामरम्।
तं माद्र्यनुजगामैका वसनं बिभ्रती शुभम् ॥"

'अत्र शुभ्रं वसनं बिभ्रती माद्री राजानम् अनुजगाम' इति व्यासवचनस्य प्रभावः दृश्यते कान्तस्य श्लोकेऽपि। तद्यथा-

"ઝીણાં વલ્કલને આજે એણે અંગે ધર્યું હતું,
નહીં લાવણ્યને ઓછું વનવાસે કર્યું હતું."

माद्र्याः समक्षं कामातुरः भवति तदा माद्री तं वारयन् कथयति-

"ડરું છું, ભય પામું છું જોઈને આજ આપને,
અરે ? કેમ વિસરો છો, ઋષિના ઉગ્ર શાપને"

तदा पाण्डुः स्वकीयां मनःस्थितिं कथयति माद्रीं प्रति। तद्यथा-

"ઘટે છે શું દેવી ! હૃદય પર આ નિર્દય થવું ?
અરે રે આ આવું પ્રબલ દુઃખ ! મારે ક્યહીં જવું ?
પ્રિયા! પ્રિયા! પ્રિયા! તારા હાથમાં સર્વ હાય રે !
ત્વરાથી દેહ જોડી દેઃ આ તો નહીં ખમાય રે !
જાણું બધું, પણ દીસે સ્થિતિ ના નવીન,
મારું નથી બલ, બન્યો જલ બહાર મીન,
દેવી ! વિચાર કરવા સઘળા તજી દે,
રે હાય ! સ્પર્શસુખ, પ્રાણસખી ! હજી દે !"

अन्तवर्णनं पश्यन्तु द्वयोः काव्ययोः-

स तया सह संगम्य भार्यया कुरुनन्दनः।
पाण्डुः परमधर्मात्मा युयुजे कालधर्मणा॥
(महा. आदि. - १२४/१२)

"વિચાર કરવા જેવો હવે વખત રહ્યો નહીં,
ઝંપલાવી પડી માદ્રી નરેન્દ્ર-ભુજની મહીં."

एवं काव्यान्ते वसन्तस्य विजयः सञ्जायते।

**निष्कर्षः**

१. महाभारते प्रसङ्गरूपेण आदिपर्वणि इयं कथा वर्तते। सैव कथा वसन्तविजये खण्डकाव्यरूपेण स्वतन्त्रतया निरूपिता वर्तते।

२. महाकाव्यवशात् महाभारते नैके प्रसङ्गाः वर्तन्ते, तेषु अयं प्रसङ्गः न विस्ताररूपः। वसन्तविजयं तु खण्डकाव्यं वर्तते खण्डकाव्यवशात् अस्य प्रसङ्गस्य विस्तारं कर्तुं कान्तेन अवसरः प्राप्तः, अतः यथोचितविस्तारः विहितः।

३. वसन्तविजये पाण्डोः आदौ कुटिरात् बहिः एकाकी गमनं, पुनः आगत्य अनुनयपूर्वकं पत्नीं माद्रीं स्वीकृत्य विहाराय गमनं कल्पितम्। महाभारते तु अस्मिन् प्रसङ्गे वने निवसन् राजा वनसृष्टिं दृष्ट्वा कामसन्तप्तः सन् वनविचरणाय गच्छति, माद्री अपि तं राजानम् अनुगच्छति।

४. माद्रीविलासस्य कान्तकल्पना सर्वथा नूतना वर्तते। पुनश्च यस्य प्रसङ्गस्य सहेतुकः अभिनिवेशः वर्तते।

५. महाभारततः पाण्डुकारुण्यकथावस्तु स्वीकृत्य कान्तः वसन्तविजये खण्डकाव्ये भावात्मकता, संक्षिप्तता, भाषाकौशल्यम् रसालेखनम्, प्रसङ्गालेखनम्, भावानुकूलछन्दरचना, नाट्यात्मकता इत्यादि तत्त्वानि खण्डकाव्यलक्षणानुगुणं निरूपितवान्।

६. महाभारतस्य पाण्डुप्रसङ्गस्य अन्तः करुणात्मकः तदनुसरन् कान्तः अपि वसन्तविजयस्य अन्तम् अपि करुणात्मकं विदधाति।

७. महाभारतस्थाः 'शापं जानन् वनौकसः कथं त्वाम् अतिक्रान्तः ?, विजने त्वां नराधिपं कर्म लोभितवती ? इत्यादयः प्रश्नाः वसन्तविजये न उपात्ताः यतो हि अन्ते किम् अभवत् ? इति भावकाः स्वयमेव स्वाभाविकतया अवगच्छन्ति।

८. महाभारतस्य अस्य प्रसङ्गस्य सर्वेऽपि श्लोकाः अनुष्टुपि छन्दसि रचिताः व्यासेन। वसन्तविजये बाहुल्यं तु वर्तते अनुष्टुपः तथापि शिखरिणी, वसन्ततिलका, द्रुतविलम्बितम्, स्रग्धरा, शार्दूलविक्रीडितं च इत्येतेषां वृत्तानां प्रयोगेण श्लोकरचना कृता कान्तेन।

## सन्दर्भग्रन्थाः

१. विश्वनाथकृतः साहित्यदर्पणः, 'मञ्जू' संस्कृतव्याख्या-हिन्द्यनुवादोपेतः, चौखम्बा सुरभारती प्रकाशन, वाराणसी, ई.स. २०१३
२. संस्कृत साहित्य का इतिहास, आचार्य बलदेव उपाध्याय, शारदा निकेतन, वाराणसी, ई.स. २००९
३. मेघदूतम्, व्याख्याकार-डॉ. दयाशंकर शास्त्री, चौखम्बा सुरभारती प्रकाशन, वाराणसी, ई.स. २०१२
४. ગુજરાતી ખંડકાવ્યો (સ્વરૂપ, વિકાસ અને આસ્વાદ), લે.-મેરુ વાઢેળ, એમ. એમ. સાહિત્ય પ્રકાશન, આણંદ-૩૮૮૦૦૧, ઈ.સ.-૨૦૧૦
५. महाभारतम्, प्रथमखण्डः, गीताप्रेस, गोरखपुर
६. महाभारतम् समीक्षित आवृत्ति, भाण्डारकर ओरिएन्टल इन्स्टीट्यूट, पुणे

*****

# श्रीनरसिंहमहेताभक्तप्रवरस्य काव्ये श्रीमद्भागवतमहापुराणस्य प्रभावः

डॉ.पङ्कजकुमारः एस्. रावलः
सहायकाचार्यः
श्रीसामनाथसंस्कृतविश्वविद्यालय
सञ्चालितमहाविद्यालयः
वेरावलम्

समग्रे संस्कृतवाङ्मये पुराणस्यापि एकं विशिष्टं महनीयं स्थानं विद्यते। तत्रापि श्रीमद्भागवतं पुराणतिलकम् एवञ्च-

**निम्नगानां यथा गङ्गा देवानामच्युतो यथा।**
**वैष्णवानां यथा शम्भुः पुराणामिदं तथा ॥**
**(भा.पु.१२-१२)**

श्रीमद्भागवतमहापुराणं वैष्णवानां भक्तानाञ्च प्रियं पुराणमस्ति। भगवतः श्रीकृष्णचन्द्रस्य समग्रं स्वकीयं तत्रापि वाङ्मयं स्वरूपं विद्यते पुराणमिदं तद् वदति पद्मपुराणोक्तं भागवतमहात्मयं यथा-

**तेनेयं वाङ्मयीमूर्तिः प्रत्यक्षा वर्तते हरेः।**
**सेवनाच्छ्रवणात्पाठाद्दर्शनात्पापनाशिनी ॥**
**(प.पु.भा.महात्म्यम् अ.६)**

भारतीयपरम्परायां ये गणमान्या वैष्णवभक्ताः सन्ति। तत्र प्रथमपङ्कतौ विराजते श्रीनरसिंहमहेताभक्तप्रवरः। एतेषां काव्येषु भगद्भक्तिर्भवति। इमे श्रीकृष्णभक्ताः भगवद्भक्ताः भागवतास्सन्ति। गुर्जरभाषायां तैः भागवतमहापुराणादेकः भावः स्वीकृतः वर्तते। श्रीमद्भागवतमहापुराणे दशमस्कन्धे पूवार्ध षोडशेऽध्याये कालीयनागलीलयाम् एकाविंशतिश्लोकैः नागपत्यः भगवतः श्रीकृष्णचन्द्रस्य स्तुतिं कुर्वन्ति। यत्र यमुनायां कालीयनागस्य उपद्रवः वृद्धिं गच्छति तत्र गोपगोपाङ्गनानां गवां च दुःखनिवारणाय भगवान् श्रीकृष्णः स्वच्छताभियानं कर्तुं नद्याः यमुनायाः संशुद्धीकरणाय लीलामिमां कुरोति। विषयप्रवेशाय भागवते स्थिता

नागपत्नीनां स्तुतिर्यथा तया स्तुत्या सह श्रीनरसिंहमहेताभक्तप्रवरस्य गुर्जरभाषायां गीतं यथा अत्र निदिर्ष्टं वर्तते।

नागपन्त्य ऊचुः

न्याय्यो हि दण्डः कृतकिल्बिषेऽस्मिंस्तवावतारः खलनिग्रहाय।
रिपोः सुतानामपि तुल्यदृष्टेर्धत्से दमं फलमेवानुशंसन् ॥

अनुग्रहोऽयं भवतः कृतो हि नो दण्डोऽसतां ते खलु कल्पषापहः।
यद् दन्दशूकत्वममुष्य देहिनः क्रोधोऽपि तेऽनुग्रह एव सम्मतः॥

तपः सुतप्तं किमनेन पूर्वं निरस्तमानेन च मानदेन।
धर्मोऽथ वा सर्वजनानुकम्पया यतो भवांस्तुष्यति सर्वजीवः ॥

कस्यानुभावोऽस्य न देव विद्महे तवाङ्घ्रिरेणुस्पर्शाधिकारः।
यद्वाञ्छया श्रीर्ललनाऽऽचरत्तपो विहाय कामान् सुचिरं धृतव्रता ॥

न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम्।
न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजः प्रपन्नाः॥

तदेव नाथाय दुरापमन्यैस्तमोजनिः क्रोधवशोऽप्यहीशः।
संसारचक्रे भ्रमतः शरीरिणो यदिच्छतः स्याद् विभवः समक्षः ॥

नमस्तुभ्यं भगवते पुरुषाय महात्मने।
भूतावासाय भूताय पराय परमात्मने॥

ज्ञानविज्ञाननिधये ब्रह्मणेऽनन्तशक्तये।
अगुणायाविकाराय नमस्तेऽप्राकृताय च ॥

कालाय कालनाभाय कालावयवसाक्षिणे।
विश्वाय तदुपद्रष्ट्रे तत्कर्त्रे विश्वहेतवे ॥

भूतमात्रेन्द्रियप्राणमनोबुद्ध्याशयात्मने।
त्रिगुणेनाभिमानेन गूढस्वात्मानुभूतये ॥

नमोऽनन्ताय सूक्ष्माय कूटस्थाय विपश्चिते।
नानावादानुरोधाय वाच्यवाचकशक्तये ॥

नमः प्रमाणमूलाय कवये शास्त्रयोनये।
प्रवृत्ताय निवृत्ताय निगनाय नमो नमः ॥

नमः कृष्णाय रामाय वसुदेवसुताय च।
प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ॥

नमो गुणप्रदीपाय गुणात्मच्छादनाय च।
गुणवृत्त्युपलक्ष्याय गुणद्रष्ट्रे स्वसंविदे ॥

अव्याकृतविहाराय सर्वव्याकृतसिद्धये।
हृषीकेश नमस्तेऽस्तु मुनये मौनशीलिने ॥

परावरगतिज्ञाय सर्वाध्यक्षाय ते नमः।
अविश्वाय च विश्वाय तद्द्रष्ट्रेऽस्य च हेतवे॥

त्वं ह्यस्य जन्मस्थितिसंयमान् प्रभो गुणैरनीहोऽकृत कालशक्तिधृक्।
तत्तस्वभावान् प्रतिबोधयन् सतः समीक्षयामोघविहार ईहसे ॥

तस्यैव तेऽमूस्तनवस्त्रिलोक्यां शान्ता अशान्ता उत मूढयोनयः।
शान्ताः प्रियास्ते ह्यधुनाऽवितुं सतां स्थातुश्च ते धर्मपरीप्सयेहतः ॥

अपराधः सकृद् भर्त्रा सोढव्यः स्वप्रजाकृतः।
क्षन्तुमर्हसि शान्तात्मन् मूढस्य त्वामजानतः ॥

अनुगृह्णीष्व भगवन् प्राणांस्त्यजति पन्नगः।
स्त्रीणां नः साधुशोच्यानां पतिः प्राणः प्रदीयताम् ॥

विधेहि ते किङ्करीणामनुष्ठेयं तवाज्ञया।
यच्छ्रद्धयानुतिष्ठन् वै मुच्यते सर्वतोभयात् ॥
(भा.पु.१०-१६-३३ तः ५३)

**॥ अधुना गुजराती-गीतम् ॥**

જળકમળ છાંડી જાને બાળા, સ્વામી અમારો જાગશે,
જાગશે તને મારશે મને બાળ હત્યા લાગશે … 1

કાં' તો બાળક તું મારગ ભૂલ્યો, કાં તારા વેરીએ વળાવીઓ,
નિશ્ચય તારો કાળ ખૂટ્યો, અહીંયા તે શીદ આવીઓ … 2

નથી નાગણ હું મારગ ભૂલ્યો, નથી મારા વેરીએ વળાવીઓ,
મથુરા નગરીમાં જુગટુ રમતાં, નાગનું શીશ હું હારીઓ … 3

રંગે રૂડો રૂપે પુરો, દિસંત કોડિલો કોડામણો,
તારી માતાએ કેટલા જનમ્યાં, તેમાં તું અળખામણો … 4

મારી માતાએ બેવ જનમ્યાં, તેમાં હું નટવર નાનુડો
જગાડ તારા નાગને મારું, નામ કૃષ્ણ કાનુડો … 5

લાખ સવાનો મારો હાર આપું,આપું હું તુજને દોરીઓ,
એટલી મારા નાગથી છાની, કરવી ઘરમાં ચોરીઓ … 6

શું કરું નાગણ હાર તારો, શું કરું તારો દોરીઓ,
શાને કાજે નાગણ તારે, કરવી ઘરમાં ચોરીઓ …7

ચરણ ચાંપી મૂછ મરડી, નાગણે નાગ જગાડિયો,
ઉઠોને બળવંત કોઇ, બારણે બાળક આવીયો … 8

બેઉ બળિયા બાથે વળગ્યાં, કૃષ્ણે કાળીનાગ નાથિયો,
સહસ્ત્ર ફેણ ફુંફવે જેમ, ગગન ગાજે હાથિયો … 9

નાગણ સૌ વિલાપ કરે જે, નાગને બહું દુઃખ આપશે,
મથુરાનગરીમાં લઇ જશે, પછી નાગનું શીશ કાપશે … 10

બેઉ કર જોડી વિનવે સ્વામી ! મુકો અમારા કંથને,
અમે અપરાધી કાંઇ ન સમજ્યાં, ન ઓળખ્યાં ભગવંતને … 11

થાળ ભરી સગ મોતીડે, શ્રીકૃષ્ણને વધાવિયો,
નરસૈંયાના નાથ પાસેથી, નાગણે નાગ છોડાવીયો … 12
**– નરસિંહ મહેતા**

एवं प्रकारेण गुर्जरगीतं भजनरूपेणापि सुप्रसिद्धं वर्तते। संस्कृतश्लोकेषु गुर्जरगीते च कुत्रचित् साम्यं कुत्रचिद् कवेः मौलिकता स्वकल्पनाविचारश्च दृश्यते। एकं वेदव्यासस्य चिन्तनं एकं भक्तकवेः श्रीनरसिंहमहेताकाव्यप्रणेतुः चिन्तनं विद्यते।

**द्वयोः तुलना समीक्षा च**

वेदव्यासविरचिते समाधिभाषाभूते महापुराणे भागवते दशमस्कन्धे पूवार्धे षोडशेऽध्याये नागपत्न्यः भगवन्तं श्रीकृष्णं स्तुवन्ति। अत्र एकविंशतिः श्लोकाः सन्तिः। अत्र षड्भिः श्लोकैः परमात्मनः ऐश्वर्यं महिमानमनुग्रहं कार्तज्ञ्यभावेन ताः वर्णयन्ति। भवतः भगवतः कार्मेवास्ति दुष्टेभ्यो दण्डदानम्। भगवताम् अभेददृष्टिस्तु सर्वेषु भवति किन्त्वत्र कालीयनागे क्रोधः समुचितो वर्तते। भवतां क्रोधः करुणामयो भवति। यथा सुभाषिते प्रोक्तं

**ये ये हताश्चक्रधरेण राजन् त्रैलोक्यनाथेन जनार्दनेन।**
**ते ते गताः विष्णुपुरीं प्रयाता क्रोधोऽपि देवस्य वरेण तुल्यः ॥**
**(पाण्डव गीता)**

अत्र नागपत्निभिः कृपया? स्तुत्यामपि ताः वदन्ति। क्रोधोऽपि भगवदनुग्रह एव सम्मतः। अनेन नागराजेन पुण्यापुण्यफलमद्यप्राप्तं कारणं सर्पयोनौ पतितत्वात् पापी स्यादेव किन्तु भवतां चरणरजोभिरभिषितक्त्वात् पुण्यवानयमिति।

षडैश्वर्यसम्पन्नस्य प्रभाव-स्वभाववर्णनं क्रियते पत्निभिः

**ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।**
**ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ (वि.पु)**

वेदव्यासस्य वर्णनानुसारं इमाः नागपत्न्यः स्वकीयां भक्तिं स्वकीयं ज्ञानं च प्रतिपादयन्ति किन्तु श्रीनरसिंहमहेताभक्तप्रवरस्य काव्ये स्थिताः वर्णिताः नागपत्न्यः भगवता सह संवादं कृत्वा स्वहृद्गतभावान् प्रतिपादयन्ति। भक्तिगीते श्रीनरसिंहमहेताभक्तप्रवरस्य तत्कवित्वं वर्तते। यत्र द्वयोः संवादः स्थापितः तथा च आदौ बालभावेन किमपि कतिपय प्रलोभनानि यच्छन्ति यत् त्वमितो गच्छ। अस्माकं स्वामी दयाभावरहितोऽस्ति त्वया सह सौहार्दयपूर्णतया न व्यवहरिष्यति अतो गच्छ। भागवते नागपत्न्यः भगवतः श्रीकृष्णस्य महिमानं तु जानन्त्येव किन्तु भगवच्चरणदृत्थितरजसामपि महिमानं गायन्ति। अस्माकं स्वामिना योऽवसरः संप्राप्तः न तादृशः बलिं विहाय अन्यैः। यथा-

**कस्यानुभावोऽस्य न देव विद्महे तवाङ्घ्रिरेणुस्पर्शाधिकारः।**
**यद्वाञ्छया श्रीर्ललनाऽऽचरत्तपो विहाय कामान् सुचिरं धृतव्रता ॥**
**(भा.पु.१०-१६-३६)**

बलेः मस्तके परमात्मा भगवान् वामनः तदा चरणं स्थापयति यदा सः कथयति यत् **पदं तृतीयं कुरु शीर्ष्णि मे निजम् ॥ (भा.पु. ८-२२-०२)** अयं कालीयनागः ततोऽपि सौभाग्यसम्पन्नः यः न वदति न कथयति यत् मम शिरसि पदं धेहि देहि वा तथापि करुणावतारः कृपां करोति। भागवते नागपत्न्यः कथयन्ति वयं किमपि नेच्छामः

**न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम्।**
**न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजः प्रपन्नाः॥**
**(भा.पु.१०-१६-३७)**

भगवच्चरणाभिलाषा वर्तते केवलं किन्तु श्रीनरसिंहमहेताभक्तप्रवरस्य काव्ये ताः कथयन्ति यत् यद् कृते अस्माभिः गृहे चौर्यं करणीयं चेत् विधास्यामो वयं रत्नान्याभूषणानि दद्मः किन्तु त्वमितः गच्छ। तदा संवादे श्रीकृष्णः कथयति यावद् अहं गोकुले अस्मि तावच्चौर्यं कर्म ममास्ति। यथा

**व्रजे वसन्तं नवनीतचौरं गोपाङ्गनानां च दूकूलचौरम्।**
**श्रीराधिकायाः हृदयस्य चौरं चौराग्रण्यं पुरुषं नमामि ॥**
**(रूपजीवगौस्वामीकृत पद्यावली)**

द्वयोः काव्ययोः एकं महत् साम्यं तदस्ति यत् उभयत्र नागपत्नीनां स्वपत्युः कृते पातिव्रत्यधर्मोऽस्ति योऽस्ति श्लाध्यः। वयं विधवाः भविष्यामः। हे भगवन् अस्माकं स्वामिनः अपराधोऽस्ति तद्वयं स्वीकुर्मः किन्तु **अपराधः सकृद्भर्त्रा सोढव्यः स्वप्रजाकृतः**। भवान् अस्माकं प्रजापालकः। हे शान्तात्मन् त्वं अन्तुमर्हिसि अतः कृपया अनुगृह्णीष्व। भगवन् प्राणांस्त्यजति पन्नगः। स्त्रीणां नः साधुशोच्यानां यतः प्राणः प्रदीयताम्॥ वयं भवतां सेवां विधास्यामः किन्तु अस्मत्प्राणप्रियान् स्वामीपादान् मा गृह्णन्तु। एतादृशः भावः श्रीनरसिंहमहेताभक्तप्रवरस्य भक्तप्रधाने काव्येऽपि वर्तते। द्वाभ्यां कराभ्यां प्रार्थनां कृत्वा सानुनयविनयपूर्वकं ताः वदन्ति स्तुवन्ति च वयं अपराधं कृतवत्यः यत् भवतां प्रभावः अस्माभिः न ज्ञातः किन्तु अस्माकं स्वामिने दण्डः प्रदीयताम्। भक्तप्रवरस्य भक्तिकाव्ये द्वयोः श्रीकृष्णकालियनागयोः युद्धं घर्षणमपि वर्णितं यत्र भगवतः पराक्रमं दृष्टवा कालियोऽपि शरणापन्नो भवति। इत्थं द्वयोः काव्ययोः भक्तिभावः काव्यचमत्कृतिश्च श्लाध्या वर्तते।

## सन्दर्भग्रन्थसूचिः


१. श्रीमद्भागवतपुराणम्, द्वारकादास भट्ट जयेश रावल, गीताप्रेस गारखपुरम्, २००३
२. श्रीमद्भागवतपुराणमाहत्मयम्, गीताप्रेस गारखपुरम्, २००३
३. विष्णुपुराणम्, गीताप्रेस गारखपुरम्, २०१३
४. नरसिंहपद्यावली, सुधीरभाई ककड, गीरनार प्रकाशन जूनागढ, २००९
५. पाण्डव गीता, गीताप्रेस गारखपुरम्, २००३
६. रूपजीवगौस्वामीकृत पद्यावली, गोकुल की गली, वृदावन ग्रन्थमाला, २००६


*****

# भक्तकविनरसिंहस्य नागदमनरचनायां श्रीमद्भागवतपुराणस्य प्रभावः।

डॉ. डायालालः एम्. मोकरिया,
सहायकाचार्यः
श्रीसोमनाथसंस्कृतयुनिवर्सिटी,
वेरावलम्

भक्तकविनरसिंहः गुजरातीसाहित्यस्य आद्यः कविः वर्तते। गुजरातीभाषा अपि संस्कृतेन प्रभाविता वर्तते। श्रीमद्भागवतमहापुराणस्य दशमस्कन्धस्य षोडशेऽध्याये कालियमोक्षप्रसङ्गः वर्णितः अस्ति। ततः कथावस्तु स्वीकृत्य कविः इमां रचनां करोति।

श्रीमद्भागवतपुराणस्य कथानुसारं कालियनागः यमुनानद्यां आगत्य जलं विषयुक्तं कृतवान् आसीत्। अतः तस्य दमनाय भगवान्कृष्णः तत्रापि बाललीलां करोति। सः क्रीडामार्गेण एव वृक्षात् यमुनानद्याः जले कुर्दनं करोति। कालियः इमं बालकं दृष्ट्वा क्रोधितः भवति एवं तं नागपाशे बद्ध्नाति। नन्दः यशोदा एवं गोकुलवासीनः यमुनातटम् आगच्छन्ति। कालियेन सह बालकृष्णस्य युद्धं भवति। नागः पराजितः भवति। नागपत्न्यः नागस्य कृते क्षमायाचनां कुर्वन्ति। भगवान् कृष्णं नागाय क्षमां ददाति एवं गुरुडस्य भयात् मुक्तं करोति। नागः समुद्रं गच्छति। श्रीमद्भागवतस्य अयं प्रसङ्गः कविना नागदमनकाव्ये प्रभावपूर्णशैल्या निरूपितः वर्तते।

भागवतपुराणस्य कथया प्रभावितं कालियमोक्षप्रसङ्गं भक्तकविः नरसिंहः नाट्यात्मकपद्धत्या प्रद्यात्मकसंवादैः प्रस्तुतं करोति। अस्मिन् काव्ये कविः मौलिकांशान् स्थाप्य भक्तेः रङ्गं पुरयति। भागवत्पुराणे नागपत्न्यः अन्ते कृष्णस्य समक्षम् आगच्छन्ति एवं कृष्णं नागाय क्षमां दातुं कथयन्ति। अस्य काव्यस्य तु प्रारम्भः एव नागपन्त्याः संवादेन भवति। नागपत्न्यः बालकृष्णं जलाशयं त्यक्तुं कथयन्ति यतोहि अत्र तासां स्वामी नागः निवसति। सः जागरणं करिष्यति चेत् अस्य बालकस्य वधं करिष्यति। एवं ताः बालहत्यायाः पापं भवति।

"જળકમળ છાંડી જા રે, બાળા ! સ્વામી અમારો જાગશે,
જાગશે, તને મારશે, મને બાળહત્યા લાગશે. "[1]

इत्थम् अत्र नागपत्न्यः पापात् भयम् अनुभवन्ति। ईदृशं वर्णनं कृत्वा कविना तासु अपि मानवीयः धार्मिकभावः पूरितः अस्ति। नागपत्न्यः बालकृष्णं न जानन्ति। अतः तु ताः तं प्रति करूणां दर्शयन्ति। अस्मिन् भयङ्करस्थले कोऽपि नागच्छेत् किन्तु अयं बालकः अत्र आगतः अतः ताः अनुमानं कृत्वा बालकृष्णं प्रश्नान् कुर्वन्ति।

"કહે રે, બાળક ! તું મારગ ભૂલ્યો ? કે તારા વેરીએ વળાવિયો ?
નિશ્ચે તારો કાળ જ ખૂટ્યો, અહીંયા તે શીદ આવિયો ?"[2]

अस्यां कण्डिकायां नागपत्नीनाम् अनुमानम् अस्ति यत् अयं बालकः मार्गं विस्मृतवान् अस्ति अथवा शत्रुद्वारा अत्र प्रेषितः अथवा तु तस्य मृत्युः एव आगतम्। अन्यथा अस्मिन् भयङ्करस्थाने कोऽपि जनः स्वेच्छया नैवागच्छेत्। अतः एव ताः तं बालकम् एव तत् विषयकं कारणं पृच्छन्ति।

बालकः अपि नागपत्नीभ्यः उत्तरं ददाति तत् रसप्रदम् अस्ति। कथयति-

"નથી, નાગણ ! હું મારગ ભૂલ્યો, નથી મારા વેરીએ વળાવિયો,
મથુરાનગરીમાં જૂગટું રમતા નાગનું શીશ હું હારિયો, "[3]

बालकृष्णस्य उत्तरे नागपत्नीनाम् अनुमानम् असत्यं प्रतीयते। केवलम् एतावदेव न, अत्र कृष्णः कारणं ददाति तदपि रोचकम् अस्ति। सः कथयति यत् मथुरानगर्यां द्यूतकीडां क्रीडीतवान्। तस्यां नागस्य मस्तकं पराजितवान्। अत्रापि कवेः मौलिकता अस्ति। भागवतपुराणे अयं प्रसङ्गः नास्ति। किन्तु कृष्णस्य इयं स्वभावः भागवतपुराणे भिन्नरूपेण चित्रितः अस्ति। इयं उक्तिः

१ નરસિંહ મહેતાના પદો, ૧૨/૧, પૃ. ૨૮

२ નરસિંહ મહેતાના પદો, ૧૨/૨, પૃ. ૨૮

३ નરસિંહ મહેતાના પદો, ૧૨/૩, પૃ. ૨૮

नागपत्नीनां मनसि इमं बालसाहसवीरं विज्ञातुं जिज्ञासा जनयति। अयं बालकः मनमोहकः अस्ति। नागपत्न्यः कथयन्ति।

"રંગે રૂડો, રૂપે પૂરો, દીસંતો કોડીલો કોડામણો,"[४]

बालकस्य रूपम् अवर्णनीयम् अस्ति अतः कविः प्रादेशिकभाषायाः भावपूर्णान् शब्दान् निरूप्य सार्धकण्डिकायां रूपवर्णनं कृत्वा विरमति। श्रीमद्भागवतपुराणे अपि बालकृष्णस्य संक्षिप्तम् रूपवर्णनम् अस्ति।

तं प्रेक्षणीयसुकुमारघनावदातं
श्रीवत्सपीतवसनं स्मितसुन्दरास्यमम्।।[५]

अत्रापि सार्धश्लोकेन एव बालकृष्णस्य वर्णनम् अस्ति। अत्र नागः बालकृष्णस्य मनमोहकं स्वरूपं पश्यति। तस्य मनसि करूणा नागच्छति किन्तु क्रोधः आगच्छति। द्वयोर्मध्ये एकः प्रमुखः भेदः संसूच्यते यत् नागपत्नीनां मनसि स्त्रीसहजा करूणा वर्तते एवं नागस्य मनसि अभिमानीजनस्य क्रोधः वर्तते।

मनमोहकम् इमं बालकं दृष्ट्वा नागपत्न्यः मनसि शङ्कां करोति यत् अयं बालकः कदाचित् तस्य मातुः अप्रियः भवितुं शक्नोति। अतः तु ताः तस्य परिवारसम्बधिनः अपि प्रश्नं करोति, किन्तु कृष्णः स्वस्य संक्षिप्तं परिचयं दत्वा नागस्य जागरणाय कथयति। अत्रापि बालकृष्णः नागः सज्ञः भवेत् इति भावं प्रदर्शयति। अधुना अस्मै बालकाय नागमिलनस्य विलम्बः न रोचते। किन्तु नागपत्न्यः अस्मैः बालवीराय विविधानि प्रलोभनानि दत्त्वा इतः दूरं कर्तुम् इच्छन्ति। तत्रापि नागपत्नीनां बालकस्य रक्षणस्य इच्छा वर्तते। किन्तु बालकृष्णः तु तानि उपेक्ष्यते एवं कथयति अपि यत् भवतिभिः इदृशं स्वामिनः गुप्तम् अपि न दातव्यम्। अत्र कविना बालसहजस्वभावः अपि दर्शितः अस्ति एवं नागपत्नीनां बालकायै साहाय्यतायाः भावः अपि प्रदर्शितः अस्ति। नागपत्न्यः नागस्य भयङ्करतां जानन्ति एवं कृष्णस्य शक्तिं न जानन्ति। अतः

४ નરસિંહ મહેતાના પદો, ૧૨/૪, પૃ. ૨૮

५ श्रीमद्भागवतपुराणम् – १०/१६/९

एव अस्य बालकस्य किमपि अनिष्टं न भवेत् एवं तस्य रक्षणं भवेत् तदर्थं गुप्तरूपेणापि सर्वं कर्तुम् इच्छन्ति, किन्तु बालकृष्णः स्वीकर्तुम् एव नेच्छति तदा अन्ते उपायरहिताः नागपत्न्यः स्वस्य पतिं नागं जाग्रयति। इत्थं नागपत्नीनां बालकस्य जलाशयात् बहिर्गमनस्य सर्वे प्रयत्नाः निष्फलाः भवन्ति तदा अन्ते ताः नागं जाग्रयति। भागवतपुराणे तु नागः पूर्वम् एव आगच्छति अतः तस्य जागरणस्य सन्दर्भः एव नास्ति।

नागपत्न्यः नागं जाग्रयति तस्मिन् अपि स्वपतेः कृते बलवन्तशब्दस्य प्रयोगः एवं कृष्णस्य कृते बालकशब्दस्य प्रयोगः कृतः अस्ति।

"ઊઠો રે, બળવંત કોઈ બારણે બાળક આવિયો."[६]

अत्रापि नागः बालकाय क्षमां दद्यात् इति नागपत्नीनां भावः सूचितः अस्ति। अस्मिन् काव्ये नागकृष्णयोः युद्धस्य वर्णनम् एकया कण्डिकया कृतम् अस्ति।

"બેઉ બળિયા બાથે વળગ્યા, કૃષ્ણે કાળીનાગ નાથિયો,
સહસ્ર ફેણા ફૂંફવે જેમ ગગન ગાજે હાથિયો."[७]

श्रीमद्भागवतपुराणे किञ्चिदधिकं युद्धवर्णनमस्ति। तत्रापि नागस्य भयङ्करता वर्णिता अस्ति।

तत्प्रथ्यमानवपुषा व्यथितात्मभोग-
स्त्यक्त्वोन्नमय्य कुपितः स्वफणान् भुजंगः।
तस्थौ श्वसञ्छ्वसनरन्ध्रविषाम्बरीष-
स्तब्धेक्षणोल्युकमुखो हरिमीक्षमाणः।।[८]

नरसिंहः सहस्रफेणायुक्तनागस्य वर्णनं मेघेन सह करोति। तत्रापि कविः गुजरातीभाषायाः रूढिप्रयोगं निरूपयति।

---

६ નરસિંહ મહેતાના પદો, ૧૨/૮, પૃ. ૨૯

७ નરસિંહ મહેતાના પદો, ૧૨/૯, પૃ. ૨૯

८ श्रीमद्भागवतपुराणम् – १०/१६/२४

कविः अस्मिन् काव्ये विधेः वक्रताम् अपि वर्णयति। यथा, नागपत्न्यः पूर्वं बालकृष्णं स्वपतेः नागात् रक्षितुम् इच्छन्ति किन्तु अन्ते तु स्वपतिम् एव कृष्णात् रक्षयितुं प्रार्थनां कुर्वन्ति।

બેઉ કર જોડીને વીનવે : "સ્વામી ! મૂકો અમારા કંથને;
અમો અપરાધી કાંઈ ન સમજ્યાં, ન ઓળખ્યાં ભગવંતને."[९]

भागवतपुराणे अपि नागपत्न्यः नागस्य रक्षणाय कृष्णं प्रार्थयन्ति। -

अनुगृह्णीष्व भगवन् प्राणांस्त्यजति पन्नगः।
स्त्रीणां नः साधुशोच्यानां पतिः प्राणः प्रदीयताम्।।[१०]

अत्र प्रलम्बिता स्तुतिः अस्ति। नरसिंहः संक्षेपेण नागपत्नीनां शरणागतिं वर्णयति। अत्र स्पष्टरूपेण ज्ञायते यत् नागपत्न्यः अन्ते एव बालकृष्णस्य भगवत् स्वरूपं जानन्ति। भागवतपुराणे अपि ताः अन्ते एव भगवतः कृष्णस्य स्तवनं कुर्वन्ति। अत्र नाट्यात्मकं कौशल्यम् अपि दृश्यते। भागवतपुराणे तु नागपत्न्यः स्वस्वामी नागः कृष्णस्य दण्डयोग्यः अस्ति इति अपि कथयन्ति। किन्तु नागदमने नागपत्न्यः तथा न कुर्वन्ति। एवं नागेन सह वयं सर्वे भवतः अपराधिनः सन्ति इत्युक्त्वा पारिवारिकं अद्वैतम् अपि दर्शयन्ति।

भागवतपुराणवत् अस्मिल् अपि नागपत्न्यः भगवतः कृष्णस्य पूजनं करोति।

"થાળ ભરી શગ મોતીએ શ્રીકૃષ્ણને રે વધાવિયા,
નરસૈંયાના નાથ પાસેથી નાગણે નાથ છોડાવિયા."[११]

अस्मिन् काव्ये नागपत्न्यः मौक्तिकैः भगवतः कृष्णस्य पूजनं कुर्वन्ति। जलनिर्मितैः मौक्तिकैः कृष्णपूजनं स्वाभाविकम् भवति। नागपत्न्यः नागं कृष्णात् मुक्तं कारयन्ति तत्र एतत् काव्यं पूर्णं भवति। भागवतपुराणे कृष्णात्

---

९ નરસિંહ મહેતાના પદો, ૧૨/૧૧, પૃ. ૨૯

१० श्रीमद्भागवतपुराणम् – १०/१६/५२

११ નરસિંહ મહેતાના પદો, ૧૨/૧૨, પૃ. ૨૯

मुक्तः चेतनाप्राप्तः नागः अपि भगवतः कृष्णस्य स्तुतिं करोति। नागदमनकाव्ये कविना अयं प्रसङ्गः न निरूपितः। इदृशं कृत्वा कविः अपराधीनः समीपे क्षमां न याचयित्वा नागपत्यः स्वपतिं स्वसन्मुखं निम्नं न पश्यन्ति। भागवतपुराणे नागः स्पष्टरूपेण स्वसमर्पणं करोति। अत्र तत् स्पष्टं न कृत्वा कविः व्यञ्जितं करोति।

भागवतपुराणे भगवान् कृष्णः नागाय आदेशं ददाति यत् सपरिवारं यमुनाजलं त्यक्त्वा समुद्रं गच्छ-

नात्र स्थेयं त्वया सर्प समुद्रं याहि मा चिरम्।
स्वज्ञात्यपत्यदाराढ्यो गोनृभिर्भुज्यतां नदी।।[१२]

नागदमनकाव्ये तस्योल्लेखः नास्ति।

भक्तिरसपूर्णे अस्मिन् काव्ये कविः मूलकथायाः केवलं कथावस्तु एव नयति। अस्यां रचनायां कवेः प्रचुरमौलिकता दृश्यते। संवादशैल्या रचिते अस्मिन् काव्ये कविना रौद्रवीरकरूणशृङ्गाराद्भूतादीनां रसाणां सुन्दरः समन्वयः कृतः वर्तते। श्रीमद्भागवतपुराणस्य दशमे स्कन्धे भगवतः कृष्णस्य विविधानां बाललीलानां वर्णनम् अस्ति तासु अत्र कविः कालियमोक्षप्रसङ्गं प्रभावकशैल्या प्रादेशिकभाषायां रुचिकररीत्या प्रस्तुतं करोति। अत्रस्थाः गुजरातीभाषायाः रूढिप्रयोगाः अपि ध्यानाकर्षकाः सन्ति। श्रीमद्भागवत-पुराणस्य प्रसङ्गाधारितं कवेः इदं काव्यं गुजरातीभाषायां प्रसिद्धं प्राप्तम् अस्ति।

## सन्दर्भग्रन्थसूचिः

(१) नरसिंह महेताना पदो, गीरनार प्रकाशन, जूनागढ, २००९
(२) श्रीमद्भागवतमहापुराणम्, गीताप्रेस, गोरखपुर, २००३

*****

१२ श्रीमद्भागवतपुराणम् – १०/१६/६०

## रहीमस्य पद्यसाहित्ये संस्कृतसुभाषितानां प्रभावः

प्रा. कुलदीपः के. राजगोरः,
सहायकाचार्यः,
सर्वकारीयकलावाणिज्यमहाविद्यालयः,
तालाला, गुजरातम्

**प्रास्ताविकम्**

विश्वस्य प्राचीनतमभाषायाः कारणत्वात् विश्वस्य नैकासु भाषासु संस्कृतस्य महत्प्रभावो दरीदृश्यते। न कोऽपि कविः लेखको वा संस्कृतस्य प्रभावादलिप्तः। तत्प्रभावो छन्दसि, अलङ्कारे, शैल्यां, विषयवस्तुनि वा यत्रकुत्रापि द्रष्टुं शक्यते। रहीमस्य रचनासु संस्कृतस्य प्रभावः आध्यात्मिकरीत्या लौकिकरीत्या च दृश्यते। यथा-

**जो रहीम ओछो बढ़े, तो अहि ही इतराय।**
**प्यादे सों फरजी भयो, टेढ़ो टेढ़ो जाय।**

सुभाषितस्य एकमित्थमपि लक्षणं वर्तते यत् दुर्जननिन्दा सज्जनप्रशंसा च। अत्र दुर्जननिन्दा दृश्यते। यः संस्कृतस्यैव प्रभावः। यथा-

**अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति।**
**रविरपि न दहति तादृक् यादृक् दहति वालुकानिकरः॥ (कादम्बरी)**

अस्मिन् सुभाषितेऽपि भिन्नरीत्या दुर्जननिन्दैव वर्तते।

अथ चात्रैव वयं रचनासन्दर्भेऽपि संस्कृतस्यैव प्रभावः इति स्पष्टं पश्यामः। यथा संस्कृते कथितं यत् **"माधुर्यव्यञ्जकैर्वर्णैः रचना ललितात्मिका। आवृत्तिरल्पवृत्तिर्या वैदर्भी रीति रिष्यते॥"**[१] अस्मिन् रहीमपद्ये प्रायशः माधुर्यव्यञ्जकानामेव प्रयोगः। ललितात्मिका वृत्तिरपि दृश्यते। छन्दसि तु प्रायशः सर्वासु भाषाष्वेव संस्कृतस्यैव प्रभावः। **"साक्षात्सङ्केतितं**

---

१ साहित्यदर्पणः- ९/१-२

**योऽर्थमभिधत्ते स वाचकः॥"** इत्यनुसारमत्र रहीमपद्ये अभिधावृत्तिः स्पष्टं दृश्यते। तथा च **"दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्॥"** इत्यनुसारमत्र रहीमपद्ये दृष्टान्तः अलङ्कारः अनुमीयते इत्यपि संस्कृतस्यैव प्रभावः। अतः स्पष्टं भवति यत् संस्कृतस्यैव प्रभावेण रहीमपद्यानि सन्ति।

**“छिमा बड़न को चाहिये..."** इत्यस्यां पङ्क्त्यामस्य संस्कृतसुभाषितस्य प्रभावो दृश्यते **"क्षमा वीरस्य भूषणम्"**। अन्यच्च-

**तरुवर फल नहिं खात है, सरवर पियहि न पान।**
**कहि रहीम पर काज हित संपति सँचहि सुजान॥**

प्रायशः संस्कृतसुभाषितस्यैवानुवादोऽत्र दृश्यते। अस्मिन्नपि पद्ये अभिधावृत्तेराश्रयो दरीदृश्यते। **“सामान्यं वा विशेषो वा तदन्येन समर्थ्यते। यत्तु सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा॥"**[२] इत्यनुसारमत्र रहीमपद्ये अर्थान्तरन्यासालङ्कारः प्रतिपद्यते, नदीवृक्षादयः सतां सम्पद्भिः समर्थ्यते इति कारणात्। अस्मिन् रहीमपद्ये संस्कृतसुभाषितस्यानुवादः तु भवत्येव किन्तु तत्रापि शैलीगतः अलङ्कारगतः वा यः प्रभावः वर्तते स प्रभावः संस्कृतभाषाया एव।

**पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः।**
**नादन्ति सस्यं खलु वारिवाहा परोपकाराय सतां विभूतयः॥**

अपरत्र द्रष्टुं शक्यते यथा-

**आव गई आदर गया, नैतन गया सनेहि।**
**ये तीनों तब ही गये, जबहि कहा कछु देहि॥**

इत्यत्र याचकनिन्दा दृश्यते। अल्पवृत्तित्वात् अल्पसमासत्वात् माधुर्यव्यञ्जकत्वात् सम्पूर्णरीत्यात्र संस्कृतस्य वैदर्भीरीतेरेवाश्रयः। तथा चात्रापि संस्कृतस्याधोलिखितस्यैव श्लोकस्य प्रभावः दृश्यते।

**देहीति वचनं श्रुत्वा देहस्थाः पञ्चदेवताः।**
**तत्क्षणादेव लीयन्ते धीह्रीश्रीकान्तिकीर्तयः॥**

---

२ काव्यप्रकाशः- १०/१०९

**'देहि'** इति वचनं श्रुत्वा एव देहस्थाः धीह्रीश्रीकान्तिकीर्तयः इति पञ्चदेवताः तत्क्षणादेव लीयन्ते। अतः कदापि कुत्रापि याचना न कर्तव्या।

**चाह गई चिन्ता मिटी, मनुआ बेपरवाह।**
**जिनको कछु नहि चाहिये, वै साहन के साह॥**

अस्मिन् पद्येऽपि संस्कृतसुभाषितस्य महान्प्रभावः प्राप्यते। प्रायः व्यवहारे दृश्यते यत् राजानः सर्वसम्पत्तियुक्ता आसन्। किन्तु रहीमः स्वपद्ये विरोधं वर्णयति यत् यः किमपि न वाञ्छति सः राज्ञामपि राजेति। अतः **"विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः॥"** इति वचनानुसारमस्मिन् पद्ये विरोधालङ्कारः दृश्यते। स संस्कृतस्य प्रभावः।

**सर्पाः पिबन्ति पवनं न च दुर्बलास्ते**
**शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति।**
**कन्दैर्फलैर्मुनिवराः क्षपयन्ति कालं**
**सन्तोष एव पुरुषस्य परं निधानम्॥**[3]

अनेनैव रीत्या अन्यत्रापि द्रष्टुं शक्नुमः यत्-

**बानी ऐसी बोलिये, मन का आपा खोय।**
**औरन को शीतल करे, आपहु शीतल होय॥**

अत्र-

**प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः।**
**तस्मात्तदेव वक्तव्यं वचने का दरिद्रता॥**

इत्यस्य श्लोकस्य सुमहत्प्रभावः ।

**रहिमन ओछे नरन सो, वैर भली ना प्रीत।**
**काटे चाटे स्वान के, दोउ भाँति विपरीत॥**

---

[3] चाणक्यनीतिदर्पणः- १६/१७

रहीमरचनायां प्राप्ते लौकिकज्ञानेऽपि संस्कृतभाषाया अपि प्रभावः दृश्यते। पद्येऽस्मिन् समासविरहितत्वात् माधुर्यव्यञ्जकत्वाच्च वैदर्भीरीतिरिष्यते। अत्रार्थान्तरन्यासालङ्कारः प्राप्यते।

**वर्जनीयो मतिमतां दुर्जनः सख्यवैरयोः।**
**श्वा भवत्यपकाराय लिहन्नपि दशन्नपि॥**

उपसंहारः

रहीमसाहित्यस्य प्रभावः जनमानसे द्रष्टुं शक्यते तथैव संस्कृतस्य प्रभावः रहीमसाहित्ये प्राप्यते। न तु कतिपयदोहासु एव, अपि तु प्रायः रहीमस्य साहित्ये बहुशः संस्कृतस्यैव सुभाषितस्य वा प्रभावः इति तु वयं स्पष्टं द्रष्टुं शक्नुमः। संस्कृतसुभाषिते मानवमस्तिष्कस्य या सरलता, सहजता शैली च दृश्यते सा एव सरलता, सहजता शैली च रहीमस्य पद्यसाहित्ये द्रष्टुं शक्यते। तस्य पद्यसाहित्ये प्रायशः वैदर्भीरीतिः प्राप्यते, सर्वत्रालङ्काराणां सुप्रयोगः दृश्यते तत्सर्वमपि संस्कृतस्यैव प्रभावः।

न केवलं रहीमसाहित्ये एव संस्कृतस्य प्रभावः अपि तु प्रायशः सर्वेष्वपि कविषु तेषां रचनासु वा संस्कृतभाषायाः प्रभावः येन केन प्रकारेण वर्तत एव। यथा दीनकरकवेः कुरुक्षेत्रकाव्ये संस्कृतमहाभारतस्य प्रभावः। रश्मिरथीत्यादिकृतिष्वपि संस्कृतभाषाया एव प्रभावः द्रष्टुं शक्यते। तथैव दुष्यन्त-जयशङ्करादीनां कवीनां कृतिष्वपि संस्कृतस्यैव प्रभावः। तुलसीदासकृतं रामचरितमानसं तु सम्पूर्णतया वाल्मीकिरामायणस्य प्रभावेण रचितम्। इत्थं प्रायशः सर्वत्र संस्कृतप्रभावः वर्तते नात्र कापि विप्रतिपत्तिः।

## सन्दर्भग्रन्थसूचिः


१. **पञ्चतन्त्रम्** - टीकाकारः- स्व. गोकुलदास गुप्त, सम्पादकः- पं. रमेशचन्द्र झा, चौखम्बा विद्याभवन वाराणसी, ई. स. – २०११

२. **हितोपदेशः** - संस्कृतटीकाकारः - श्रीगुरुप्रसादशास्त्री, भाषाटीकाकारः- आचार्य श्रीसीतारामशास्त्री, सम्पादकः- प्रो. बालशास्त्री, चौखम्बा सुरभारती प्रकाशन, ई.स.- २०१०

३. **नीतिशतकम्** - व्याख्याकारः श्रीकृष्णमणि त्रिपाठी, चौखम्बा सुरभारती प्रकाशन, वाराणसी, ई.स. – २००५

४. **चाणक्यनीतिदर्पणः**- व्याख्याकारः डॉ. गुञ्जेश्वर चौधरी, चौखम्बा सुरभारती प्रकाशन-२०१०

५. **साहित्यदर्पणः** विश्वनाथाचार्यप्रणीतः, व्याख्याकारः आचार्य कृष्णमोहनशास्त्री, प्रकाशन – चौखम्बा संस्कृत संस्थान, वाराणसी, संस्करणः पुनर्मुद्रण, वि.सं. २०६३ (२००७)

६. **काव्यप्रकाशः** (भामह) लेखकः स्व. विश्वेश्वर सिद्धान्त शिरोमणि संपादकः डॉ. नरेन्द्र एम. ए. डिलिट् प्रकाशन संस्था ज्ञानमण्डल लिमिटेड, वाराणसी आवृत्ति वर्ष : सातवाँ संस्करण-१९९८

७. **रहीम के दोहे**

*****

## नाकरस्य ध्रुवाख्याने भागवतस्य प्रभावः

श्री धवलः ए. खांडेका
शिक्षकसहायकः
सर्वकारियविद्यालयः, बोटाद

### प्रास्ताविकम्

संस्कृतं तु भारतीयभाषाणां जननी, अत एव संस्कृतस्य प्रभावः भारतीयभाषासु तासां साहित्येऽपि दरिदृश्यते एव। संस्कृतस्य समृद्धित्वात् तस्याः प्रभावः अन्यप्रादेशिकभाषावत् गुर्जरसाहित्येऽपि दृश्यते। मध्यकालिन गुर्जरकविपङ्क्तिषु अन्यतमः कविः नाकरोऽस्ति। तस्य आख्यानानि सुप्रसिद्धानि। तेषु संस्कृतसाहित्यस्य विशेषतया प्रभावः वर्तते। अस्य शोधविषयस्य फलश्रुतिहेतवे नाकरस्य ध्रुवाख्यानमङ्गीकृतमस्ति।

शोधपत्रमिदं पञ्चभागेषु विभक्तम्, ते पञ्चभागाः क्रमशः यथा १). प्रास्ताविकम् २). नाकरस्य परिचयः कृतयश्च ३).विषयप्रवेशः (नाकरस्य ध्रुवाख्याने भागवतस्य प्रभावः ४). उपसंहारः ५). सन्दर्भसाहित्यं च ।

### कवेः परिचयः कृतयश्च

मध्यकालिनगुर्जरसाहित्ये नरसिंहयुगानन्तरं नाकरयुगं प्रमाणीक्रियते। नाकरस्य समयः १६ शतके आसीत्। सः वडोदरानगरस्य निवासी आसीत्। जात्यां वणिको सन्नपि आख्यानलेखने तस्य रुचिः अधिका दरीदृश्यते। अन्यकविवत् तस्य आख्यानलेखनस्य हेतुः उदरपूर्तिः न अपि तु केवलं परमार्थचिन्तनमासीत्, इति तस्य आख्यानेन कथयितुं शक्यते। नाकरस्य अधिकः परिचयः न लभ्यते।

हरिश्चन्द्राख्यानम्, शिवविवाहः, नलाख्यानम्, लवकुशाख्यानम्, ध्रुवाख्यानम्, मृगलीसंवादः – इत्यादयः नाकरस्य कृतयः सन्ति।

**विषयप्रवेशः (नाकरस्य ध्रुवाख्याने भागवतस्य प्रभावः)**

भागवते ध्रुवचरित्रं चतुर्थस्कन्धस्य ८ तः १२ अध्यायेषु परिलक्षितमस्ति एवं नाकरस्य ध्रुवाख्यानं १ तः १३ कडवा इति विभागेषु लिखितमस्ति। अस्मिन् ध्रुवाख्याने भागवतस्य कथानकं, वर्ण्यविषयं शब्दवैभवञ्च दरिदृश्यते। यथास्थितिं पश्यामः-

कथाप्रारम्भः –

स्वायम्भुवस्यापि मनोर्हरेरंशांशजन्मनः।।६।।
प्रियव्रतोत्तानपादौ शतरुपापतेः सुतौ।।७।।

(भा.४.८.६-७)

यथा भागवते स्वायम्भुवमनोः अंशतः प्रियव्रतोत्तानपादयोः जन्मस्य वर्णनं लभ्यते तथैव अत्रापि दृश्यते.यथा-

સ્વાયમ્ભુવ મનુ ઊત્પન્ન થયા,
જે મોટા મહારાજ.
તે તણા બે પુત્ર કહિએ,
પ્રિયવ્રત મહાગુણધામ.
ઊત્તાનપાદ બીજા સહી.

ધ્રુવાખ્યાન - કડવુ 1.26-27

उत्तानपादस्य वर्णनम्-

जाये उत्तानपादस्य सुनीतिः सुरुचिस्तयोः।
सुरूचिः प्रेयसी पत्युर्नेतरा यत्सुतो ध्रुवः।।

(भा.४.८.८)

यथा श्लोकेऽस्मिन् भार्ययोः मध्ये उत्तानपादस्य सुरुचिः प्रिया, सुनीतिः च अप्रिया वर्णिते, तथैव नाकरोऽपि कडवा मध्ये वर्णयति।

ઊત્તાનપાદને બે સ્ત્રીઓ જાણો જી.
એક સુનીતિ બીજી સુરૂચી વિખાણો જી.

(ધ્રુવાખ્યાન – કડવું – 1.29)

સુનીતિના સામું ન જોતો ઊત્તાનપાદ નરેશ.

(ધ્રુવાખ્યાન – કડવું-2.1)

सुरुचेः कठोरवचनानि-

न गृणितो मया यत्वं कुक्षावपि नृपात्मजः।

(भा.4.8.11)

यथा सुरुचिः ध्रुवाय कठोराणि वचनानि कथयति, तथैव नाकरोपि ध्रुवाख्याने प्रतिपादयति। यथा-

છું રાજકુમાર તું સાર, પણ નવ રહ્યો મુજ ઊદર મોઝાર.

(ધ્રુવાખ્યાન – કડવું – 2.17)

गर्भे त्वं साधयात्मानं यदीच्छसि नृपासनम्॥

(भा.4.8.13)

श्लोकेऽस्मिन् सुरूचेः कठोरवचनानि, तथैव ध्रुवाख्यानेऽपि-

જો બેસવું રાય ઊચ્છંગ, તો મુજ ઊદરનો કર સંગ.

(ધ્રુવાખ્યાન-કડવું.2.18)

नारदविचारः-

अहो तेजः क्षत्रियाणां मानभङ्गममृष्यताम्।
बालोप्ययं हृदा धत्ते यत्मातुरसद्वचः॥

(भा.4.8.26)

यथा भागवते नारदः ध्रुवस्य विषये वदति, तथैव नाकरोपि वर्णयति।

માનભંગને ક્ષત્રી માને ભય નહિ ઉદર ભરવા.
પાંચ વર્ષનો બાળક જાણે, અપરમાના કૂડા વેણ.

(ધ્રુવાખ્યાન-કડવું.3.8-9)

नारदोपदेशः-

तत्तात गच्छ भद्रं ते यमुनायास्तटं शुचि।
पुण्यं मधुवनं यत्र सांनिध्यं नित्यदा हरेः।।

(भा.4.8.42)

यथा भागवते नारदोपदेशः वर्णितः, तथैव नाकरोपि प्रतिपादयति।

તું જા મધુવનમાં ભાઈ, વસી રહે જ્યા જદુરાઈ.
નિત્ય યમુનાજળમાં કરજે સ્નાન, મળશે તને ત્યાં ભગવાન.
(ધ્રુવાખ્યાન- કડવું,4.3)

ध्रुवस्य तपः-

त्रिरात्रान्ते त्रिरात्रान्ते कपित्थबदराशनः।
आत्मवृत्यनुसारेण मासं नित्येऽर्चयन्हरिम्।।
(भा.4.8.72)

यथा भागवते धुवस्य तपसः वर्णनम्, तथैव ध्रुवाख्यानेपि लभ्यते। यथा-

ત્રણ દિવસ તો અન્ન ન ખાધું, કીધો ફળનો આહાર.
એક એક માસ ગયા પૂઠે, વેઠ્યું દેહે કષ્ટ અપાર.
(ધ્રુવાખ્યાન.-કડવું.5.10)

अलकापुरी गमनम्-

ध्रुवो भातृवधं श्रृत्वा कोपामर्षशुचार्पितः।
जैत्रं स्यन्दनमास्थाय गतः पुण्यजनालयम्।।
(भा.4.10.4)

यदा ध्रुवः भातृवधस्य वार्तां श्रृणोति, तदा कोपं कृत्वा अलकापुरीं याति। ध्रुवाख्यानेपि नाकरः वर्णयति – यथा

સુણી ધ્રુવે વાત વિકરાળ લાગી શોકની અગે જ્વાળ.
જાણ્યું અલકાપુરીના યક્ષે, મારા બન્ધુને લીધો ભક્ષે.
કરી કોપ ચાલ્યા ધ્રુવરાય, વિજયરથમાં બેસી ત્યાય.
(ધ્રુવાખ્યાન.- કડવું.9.10-11)

ध्रुवं प्रति स्वायंभुवोः वचनम्-

विसर्गादानयोस्तात पुंसो दैवं हि कारणम्॥
(भा.4.11.24)

यथा मनुः ध्रुवाय सद्वचनानि निवेदयति, तथैव नाकरोपि ध्रुवाख्याने लिखति यथा-

મારનાર તો છે એક,
ધર્ય મનમાં એહ સદૈવ.
સૃજે પાળે મારે દેવ.
(ધ્રુવાખ્યાન-કડવું.9.42)

ध्रुवस्य परमपदप्राप्तिः-

इत्युत्तानपदः पुत्रो ध्रुवः कृष्णपरायणः।
अभूत्त्रयाणां लोकानां चूडामणिरिवामलः॥
(भा.4.12.38)

यथा श्लोकेऽस्मिन् ध्रुवस्य परमपदप्राप्तेः वर्णनं प्राप्यते तथैव नाकरस्य ध्रुवाख्यानेपि अस्य प्रभावः वर्तते। यथा-

ધ્રુવજી પામ્યા એહ પદ, ઊત્તાનપદના તન,
ત્રિલોકીના મસ્તકમણિ, યથા ધ્રુવ મહાધામ.

**उपसंहारः**

સુણી ભાગવત રે,
કથા કરી ધ્રુવતણી.
(ધ્રુવાખ્યાન.કડવું. 13 – 26)

नाकरस्य अनेन वचनेन तथा संशोधनेऽस्मिन् प्रतिपादितैः उदाहरणैः कथयितुं शक्यते यत् नाकरस्य ध्रुवाख्याने भागवस्य प्रभावो वर्तते। इतः परमपि संशोधनस्य अवकाशोऽस्ति किन्तु विस्तारभयात् विरम्यते।

## सन्दर्भसाहित्यम्

१. श्रीमद्भागवतमहापुराणम्, गीताप्रेस गोरखपुर.
२. કવિ નાકર એક અધ્યયન, ચીમનલાલ ત્રિવેદી.
३. પ્રાચીન કાવ્યમાલા ગ્રન્થ.11, હરગોવિંદ દ્વારકાદાસ કાંટાવાળા અને નાથાશંકર પૂજાશંકર શાસ્ત્રી.

*****

# कविभालणरचितः “कादम्बरी” अनुवादग्रन्थे संस्कृतसाहित्यस्य प्रभावः

श्री प्रदीपकुमारः एम्. जोषी
अध्यापकः
श्रीब्रह्मर्षिसंस्कृतमहाविद्यालयः, नडियाद

**प्रस्तावना**

सर्वासां भाषाणां जननी वर्तते संस्कृतभाषा। भाषायाः यथागुणं तस्याः प्रभावः समाजे द्रष्टुं शक्यते, अपरञ्च समाजेस्थितानां जनानां वाचि तथा तेषां क्रियायां भाषायाः नाम भाषातः जनितायाः संस्कृत्याः प्रभावो दृश्यते एव। संस्कृतभाषायाः समृद्धित्वात् एतस्याः प्रभावः अन्यासु भाषासु अपि वर्तते। संस्कृतभाषायाः प्रभावो गुर्जर-अनुवादलेखन-साहित्ये अपि व्यासेन दृश्यते। गुर्जरसाहित्ये भालणकविना अपि अनुवादसाहित्ये नैके ग्रन्थाः संस्कृतभाषातः गुर्जरभाषायां परिवर्तिताः।

**भालणस्य परिचयः**

भालणस्य समयविषये कथयामि चेत्, अयं कविः पञ्चदशशताब्द्याः उतरार्धे अभवत्, अर्थात् अयं मध्यकालिनगुजरातीकविः आसीत्। तस्य निवासः पाटणनगरे आसीत्। तथा संस्कृतभाषायाः अयं श्रेष्ठपण्डितः परम् आख्यानकविः, पदकविः, अनुवादकश्च जातः। तस्य गुरुः श्रीपतिः वा श्रीपत स्वीक्रियते। सः संस्कृतज्ञः तथा व्रजभाषायाः ज्ञाता अपि आसीत्। जीवनस्य आरंभे सः देवभक्तः अथ च अनेकेषां देवानां स्तुतिः तेन कृता तस्मात् अयं कविः संप्रदायं न अनुसरति। तस्य जीवनस्य उत्तरार्धे रामं प्रति अधिका आस्था आसीत् इति तस्य कवेः रचनां विलोक्य वक्तुं शक्यते।

**कवेः कृतयः**

भालणकविना आख्यानस्य तथा पदानां सर्जनं कृतम्। बाणभट्टस्य महिमावती गद्यकथा कादम्बर्याः गुर्जरभाषायाम् अनुवादः कृता। कादम्बर्याः अनुवादेन अस्य कवेः कीर्तिः लोके महती विख्याता। अस्य कवेः अपराः कृतयः अपि सन्ति- સપ્તશતી, મૃગી આખ્યાન, જલંધર આખ્યાન, મામકી આખ્યાન,

ધ્રુવાખ્યાન, નળાખ્યાન च। एतानि आख्यानानि पुराणाधारितानि सन्ति। भालणस्य रचना द्वे अधिकतया अस्माकं दृष्टिं कविं प्रति आकर्षयति ते कृती "દશમસ્કન્ધ" तथा "રામબાલચરિત"।

**विषयप्रवेशः**

भालणकवेः अनेकेषु ग्रन्थेषु अत्र कवेः कादम्बरी इति अनुवादग्रन्थं स्वीकृत्य मम शोधपत्रस्य विषयः विस्तार्यते। तत्रोदाहरणरूपेण अत्र अंशाः पश्यामः तद्यथा-संस्कृतकविबाणस्य मूलकृत्यां कादम्बर्यां मङ्गलाचरणम् -

**रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे।**
**अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः।।६।।**
**कादम्बरी (कविबाणविरचिता संस्कृतमूलकृतिः)**

अस्य मङ्गलाचरणस्यैव प्रारम्भं कुर्मः तदा भालणकविना तस्य अनुवादग्रन्थः संपूर्णः संस्कृतग्रन्थम् एव अनुसरति तथा अनुवादे न स्वल्पमपि अर्थपरिवर्तनं द्रष्टुं शक्यते यथा गुर्जरभाषायां राष्ट्रीयकविः झवेरचंद मेघाणी अनुवादकः यथा आसीत्, तथैव भालणकविः अपि समर्थः अनुवादकः अस्ति। "મોર બની થનગાટ કરે" काव्यमिदं झवेरचंद मेघाणिकवेः अस्ति, पद्यमिदम् अनुवादभूतः अस्ति, तथापि एतस्य भावाः न परिवर्तताः, पद्यमिदं बंगालीभाषायाः साहित्यात् अनुवादितः। तथैव वयं कविभालणकृतः कादम्बरी इत्यस्य अंशान् पश्यामः। मङ्गलाचरणं यथा-

**રજોગુણી શરજિ નિ પાલિ**
**સત્ત્વવૃત્તિ સંસાર,**
**પ્રેમી પ્રણમૂં તે અજનિ,**
**જે તમિ કરિ સંહાર.(6)**
**કાદંબરી (કવિ ભાલણ કૃત, પૂર્વભાગ –6)**

कादम्बर्याः मङ्गलाचरणस्योदारणम् इदम्। अस्मिन् अनुवादे भालणकविना संस्कृतश्लोकस्य अनुवादः कृतः, अत्र ग्रन्थोऽयं संस्कृतभाषायाः तु अस्त्येव, किन्तु अनुवादे ये शब्दाः સંસાર – સંહાર एते दृश्यन्ते, ते सर्वेऽपि

संस्कृतभाषायाः उद्धृताः अतः तत्समशब्दाः। अत्र संस्कृते कादम्बरी इति क्लिष्टं प्रतिभाति, किन्तु भालणकविना गेयस्वरुपं दत्त्वा कादम्बरी अलङ्कृता।

अपरञ्च कविबाणेन विंशतिः मङ्लचरणानि कादम्बर्यां कृतानि, तत्र सप्तमं मङ्गलाचरणं संस्कृतभाषायाः मूलकृतौ पश्यामः तदा-

**बभूव वात्स्यायनवंशसभषो**
**द्विजो जगद्गीतगुणोऽग्रणी सताम्।**
**अनेकगुप्तार्चितपादपङ्कजः**
**कुबेरनामाश इव स्वयंभुवः।।७।।**
**कादम्बरी (कविबाणविरचिता संस्कृतमूलकृतिः)**

कविभालणेन सप्तमश्लोकस्य कृतानुवादः अत्र प्रस्तूयते। मूलकृतौ जगद्गुणोऽग्रणीः सताम् इति शब्दस्य મહામુનિ इति शब्देन आशयं स्पष्टयति तथा अंश इव स्वयंभुवः इति विशेषणं त्यजति, **अनेकगुप्तार्चितपादपङ्कजः** अत्र अनेकशब्दं परित्यज्य गुप्तार्चित अर्थात् वैश्यजनैः पूजितः इत्यत्र વિપ્રવંદિત इति पादपङ्कजः इत्यस्य विशेषणं स्थापयति।સ્પર્શ કરી પાવન अयमपि कविभालणस्य संपूर्णं विशिष्टं निर्मितपदम् अस्ति। अनुवादे अपि तत्समशब्दाः बहवः दृश्यन्ते यथा- વિપ્રવંદિત,પદપંકજ इत्यादयः शब्दाः संस्कृतभाषातः साक्षात् उद्धृताः ते अत्र अस्य संस्कृतस्य कृतानुवादे पश्यामः तदा–

**વાંછાયન કુલિ કુબેર નામિ**
**વિપ્ર હૌઓ મહામુનિ,**
**વિપ્રવદિત યેહનાં પદપંકજ-**
**સ્પર્શ કરી પાવંન.7**
**કાદંબરી (કવિ ભાલણ કૃત, પૂર્વભાગ –7)**

अत्र ये द्वे उदाहरणे प्रस्तुते ते मङ्गलाचरणस्य पद्ये स्तः, अथ च कविभालणेन गद्यसाहित्यमपि गेयस्वरूपे परिवर्तितम्। तद् स्वरूपं पश्यामः अतः अत्र पूर्वं मूलसंस्कृतगद्यं प्रस्तुयते यथा कादम्बर्याः मूलगद्यम् -

आसादशेषपनरपतिशिरः समभ्यर्चितशासन इवापरः, चतुरुदधिमालामेखलाया भुवो भर्ता, प्रतापानुरागावनतसमस्त-सामन्तचक्रः, चक्रवर्तिलक्षणोपेतः, चक्रधर इव करकमलोपलक्ष्यमाण-शङ्खचक्रलाञ्छनः, हर इव जितमन्मथः, गुह इवप्रतिहतशक्तिः, कमलयोनिरिव विमानीकृतराजहंसमण्डलः, जलधिरिवलक्ष्मीप्रसूतिः, गङ्गाप्रवाह इव भगीरथपथप्रवृत्तः, रविरिव प्रतिदिवसो-पजायमानोदयः, मेरुरिव सकलभुवनोपजीव्यमान-पादच्छायः, दिग्गज इवानवरतप्रवृत्त-दानार्द्रीकृतकरः, कर्ता महाश्चर्याणाम्, आहर्ता क्रतूनाम्, आदर्शः सर्वशास्त्राणाम्, उत्पत्तिः कालानाम्, कुलभवनं गुणानाम्, आगमः काव्यामृतरसानाम्, उदयशैलौ मित्रमण्डलस्य, उत्पातकेतुरहितजनस्य, प्रवर्तयिता गोष्ठीबन्धानाम्, अग्रणीर्विदग्धानाम्, वैनतेय इव विनतानन्दजननः, वैनतेय इव चापकोटीयमुत्मारितसकलारातिकुलाचलो राजा शूद्रको नाम।

कादम्बरी (कविबाणविरचिता संस्कृतमूलकृतिः)

कविभालणः अयमेव गद्यांशस्य पद्यस्वरूपं दत्त्वा तेनैव भावेन लिखति स्वानुवादकृतकादम्बर्यां तद्यथा गुर्जरभाषायाम्-

એક શૂદ્રક નામિ રાજા હૌઉ, સુરપતિની જાણી જોડિ,
આજ્ઞા તેહની કોએ ન લોપિ મોટો મહીપતિ કોડિ.
ચ્યારિ-ઉદધી-મેખવા મેદની કેરુ એક જ નાથ,
સામતક રાજા સવિ જોડિ દીન થતા તે હાથ.
કલ્પદ્રુમ શરખુ આશ્રિતાનિ, દ્રવ્વિ ઉદધિ સમાન,
કલાનિ જાણી ઉતપતિ, સકલશાસ્ત્ર-નિધાન.
ધનુષધારીમાંહાં જાણે ગુહ શિરોમણિ ભૂપ,
અશ્વિનીસુતનાથી અતિ સુંદર જે રાજાનૂં રૂપ.

કાદંબરી (કવિ ભાલણ કૃત, પૂર્વભાગ)

अनुवादकृते अस्मिन् गद्यांशे કલ્પદ્રુમ સરખુ આશ્રિતાનિ तथा અશ્વિનીસુતનાથી અતિ સુંદર જે રાજાનું રૂપ, एते वाक्ये द्वे कविभालणद्वारा नूतनलिखिते स्तः। मूलसंस्कृते **गुह इवाप्रतिहत शक्तिः** इत्यत्र अप्रतिहतशक्तिः अर्थात् न केनापि हतः तादृशः इति भवति, इत्यत्र एतस्य विशेषणस्य स्थाने

**ધનુષધારીમાંહાં જાણે, ગુહ શિરોમણિ ભૂપ.** एतादृशं विशेषणम् उत्प्रेक्षया प्रददाति कविभालणः। गद्यांशे कविभालणेन अन्यानि विशेषणानि त्यक्तानि सन्ति किन्तु अर्थपरिवर्तनं न भवति।भालणकवेः द्वितीयगद्यांशस्योदाहरणं पश्यामः तद्यथा-

**"अपसृते च तस्मिन् स विहंगराजो राजाभिमुखो भूत्वा समुन्नमय्य दक्षिणं चरणमतिस्पष्टवर्णस्वरसंस्कारया गिरा कृतजयशब्दो राजानमुद्दिश्यार्यामिमां पपाठ।**

**स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः।**
**चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रिणाम्।।**

अग्रे भालणकविः संस्कृतमूलकृतौ कादम्बर्यां चाण्डालकन्या वैशंपायनं शुकं शूद्रसमक्षं वार्तायाः प्रस्तावं प्रस्तोतुम् आनयति तस्मिन् प्रसंगे गद्यपद्ययोः कथम् अनुवादः करोति तस्योदाहरण अत्र पश्यामः। यथा अनुवादकृतकादम्बर्याः अंशास्वरूपं यथा-

**રા આગવી મેહેલી ગ્યુ અલગુ અત્યજ એહવું ભાખી,**
**શુક સન્મુખ થઈ પૃથ્વીપતિનિ, ઊંચુ દક્ષિણ ચરણ.**
**જય જય કહી ભણીઅ આર્યા સ્પષ્ટ મનોહર - વર્ણ.**

**આર્યા.**

**અવિરલ આંસૂસ્નાન(ઈ) વિયોગ-પાવક પડી પ્રતદીન કરઈ,**
**તવ રિપુતરણી-કુચયુગ વિમુક્તાહાર વ્રત અણસરઈ.67.**
**કાદંબરી (કવિ ભાલણ કૃત, પૂર્વભાગ)**

अनुवादकृतगद्येऽस्मिन् श्लोकस्य तु यथार्थ्यम् अनुवादस्य कवेः यत्नः दृश्यते, उत्तरार्धे छन्दःभङ्गस्तु अस्त्येव। किन्तु भावस्तु तथैव अस्ति यथा संस्कृतस्य मूलग्रन्थे भावः उपलभ्यते। अत्र कवेः भालणस्य अनुवादकरूपेण तस्य पात्रता सिद्ध्यति। सर्वत्र अनुवादे बाहुल्येन भालणकविना संस्कृतात् शब्दाः स्वीकृताः ते स्वयमेव शब्दाः तत्समत्वेन यथार्थतां याति।

**शोधपत्रस्य उपादेयता**

अनेन शोधपत्रेण येषां पाठकानां मनसिएतादृशी रुचिः जायते यथा-संस्कृतसाहित्यस्य कारणेन गुर्जरसाहित्ये समृद्धिः,संस्कृतभाषायाः गुर्जरसाहित्ये प्रभावः, संस्कृतस्य अध्ययनेन अन्यासु भाषासु प्राविण्यम्, संस्कृतस्य शब्दानाम् अन्यासु भाषासु तत्समशब्दत्वेन प्रयोगाः, मध्यकालिनगुजरातीसाहित्ये तथा कविषु संस्कृतस्य प्रभावः इत्यादीनां कृते शोधपत्रमिदं पाठकानां मनसि आगतानाम् एतेषां विषयाणां समाधानं करिष्यति।

**उपसंहारः**

शोधपत्रमिदं कादम्बरी इति ग्रन्थस्य सरलतायै वा जनानां मनसि एतां वार्तां प्रति मनः आकृष्टं स्यात्, तदर्थं कृतम् अस्ति। शोधपत्रेऽस्मिन् गुर्जरभाषायां कविभालणकृतकादम्बरी-अनुवादग्रन्थस्य पठनेन संस्कृत-मूलकृतिः अपि सरसं वा रहस्यमयं भविष्यति, उभयोः कृतयोः मूलकृतिः कठिना प्रतिभाति, किन्तु भालणकविकृतानुवादेन कादम्बरी जनेषु भोग्या भविष्यति, अत्र गुर्जरसाहित्ये तु संस्कृतस्य प्रभावः स्वयमेव सिद्ध्यति कारणम् अस्ति यत्- अनुवादग्रन्थः अत्र कादम्बरी अस्ति अपरञ्च तस्यानुवादे बहवः शब्दाः संस्कृतस्यैव। अतः अत्र संस्कृतस्य प्रभावः प्रान्तीयभाषान्तर्गते गुर्जरसाहित्ये स्पष्टरूपेण सिद्ध्यति।

**सन्दर्भग्रन्थसूचिः**

१. ગુજરાતી વિશ્વકોષ,ખંડ-14 (ત્રિવેદી ચીમનલાલ)

२. ગુજરાતી સાહિત્યકોષ ભાગ. ખંડ-3 (શાસ્ત્રી કેશવરામ કાશીરામ)

३. कादम्बरी (कविबाणविरचिता संस्कृतमूलकृतिः)

४. કાદંબરી (કવિ ભાલણ કૃત, પૂર્વભાગ-1, ગુજરાતી મૂળ કૃતિ)

*****

# प्रादेशिकभाषायाः बालसाहित्येषु संस्कृतसाहित्यस्य प्रभावः

डॉ. नेहलः नरेन्द्रकुमारः दवे
सहायकाचार्यः
लकुलीश-योग-युनिवर्सिटी
अहमदाबाद

## ➢ शोधसारः (Abstract)

संस्कृतसाहित्यस्य अन्यभाषासु प्रभावः वर्तते इति तु सर्वविदम्। संस्कृतग्रन्थानाम् अनुवादाः अपि बहुधा प्रसिद्धाः। परन्तु संस्कृतपद्यानाम् पद्येषु एव अनुवादः जातः इत्यपि बोध्यम्। न केवलं भारतीयभाषासु पद्यात् पद्येषु अनुवादः जातः, अपि तु विदेशीयभाषासु अपि पद्यानुवादः जातः इति शोधलेखेऽस्मिन् उपस्थाप्यते। पञ्चतन्त्रस्य अन्यभाषासु या अनुवादयात्रा अस्ति, सा अपि अत्र उल्लिखिता। बालभोग्यानां पञ्चतन्त्रस्य कथानां विस्तारः सम्पूर्णे विश्वे विद्यते, एवं ताः कथाः एव विश्वस्य बालसाहित्यस्य आधारत्वेन उपस्थापिताः सन्ति। हितोपदेशकथाः, प्रह्लादचरितं, ध्रुवचरितं, हरिश्चन्द्रचरितं, संहासनद्वात्रिंशतिः, वेतालपञ्चविंशतिः, पञ्चतन्त्रम् इत्येतेषां संस्कृतपद्यसाहित्यानां भारतस्य सर्वासु भाषासु अनुवादः जातः, तस्य अनुवादस्य आधारेण अनेके प्रादेशिकाः कवयः स्वस्य निवीनं पद्यसाहित्यं रचितवन्तः। पञ्चतन्त्रस्य पहलवी, ईरानी, सीरियाई, अरबी, यूनानी, रूसी, स्लावा, हिब्रू, स्पैनिश, लैटिन, जर्मन, आङ्ग्लं, ब्रूती, तूर्की, फ्रेञ्च, स्वीडिश, पोलिश, स्पोंडेल, डच, हंगापियाई इत्येतासु भाषासु अनुवादः जातः। तेषाम् अनुवादानाम् अपि अनेके अनुवादाः जाताः। एवं बालसाहित्यस्य विषये संस्कृतं न केवलं प्रादेशिकभाषाः प्रभावयति, अपि तु विश्वस्य सर्वाः भाषाः प्रभावायति।

## ➢ भूमिका (Introduction)

बालसाहित्यविषये सम्पूर्णे विश्वे पञ्चतन्त्रस्य प्रभावः वर्तते। वास्तव्येन न केवलं भारतीय-प्रादेशिक-भाषासु, अपि तु सम्पूर्णविश्वस्य प्रादेशिकभाषासु निर्मितस्य बालसाहित्यस्य मूलस्रोतः संस्कृतसाहित्यस्य हिरकसमानः ग्रन्थः

पञ्चतन्त्र-ग्रन्थः वर्तते। पञ्चतन्त्रस्य कथाः अफगानिस्तान-आदि-देशानां मार्गेण सम्पूर्णस्य विश्वस्य बालसाहित्ये प्रभावम् अस्थापयत्। अत एव अलिफ लैला इत्यादिनां ग्रन्थानां रचनायां पञ्चतन्त्रस्य शैल्याः प्रभावः स्पष्टतया दरीदृश्यते। भारते अनुवादस्य परम्परा अतीव पुरातनी वर्तते। परन्तु लिखितग्रन्थानां प्रचलने सति एव अनुवादस्य एतस्याः प्राचीनायाः परम्परायाः ज्ञानम् अभवत्। गुजरातराज्यस्य प्रसिद्धः रचनाकारः मूळशङ्कर-महोदयस्य मते कथाः तु सांस्कृतिपूञ्जः अस्ति।[१] कथायाः प्रचारे सति, सा वर्धमाना भवति। पञ्चतन्त्रस्य २०० अधिकाः अनुवादाः अद्यत्वे उपलभ्यन्ते। संस्कृतसाहित्यस्य बालकथानां विकासस्य क्रमः कीदृशः आसीत्, संस्कृतसाहित्यस्य बालभोग्यकथानां विस्तारः सम्पूर्णे भारतवर्षे, आविश्वं च कथम् अभवत्, अद्यापि संस्कृतसाहित्यस्य प्रभावः कुत्र कुत्र दरीदृश्यते? इत्यादयः विषयाः शोधलेखेऽस्मिन् चर्चिताः सन्ति।

## ➢ शोधोद्देशाः (Research Objective)

- संस्कृतपद्यसाहित्यस्य भारतस्य प्रादेशिकभाषायाः पद्यसाहित्ये विशेषप्रभावस्य विषये अध्ययनाय।
- संस्कृतपद्यसाहित्यस्य विदेशीयभाषायाः पद्यसाहित्ये विशेषप्रभावस्य विषये अध्ययनाय।
- पञ्चतन्त्रस्य पद्यात्मकस्य, गद्यात्मकस्य च भागस्य क्रमेण पद्यात्मकतया, गद्यात्मकतया च अनुवादस्य स्थितेः अध्ययनाय।
- संस्कृतभाषायाः पद्यसाहित्यस्य कालान्तरे भारतस्य विविधासु भाषासु ये अनुवादाः जाताः, तेषां विषये अध्ययनाय।
- संस्कृतात् निर्गतस्य बालसाहित्यस्य देशे, विदेशे च कीदृशी यात्रा आसीत् इति अध्ययनाय।

## ➢ शोधप्रविधिः (Research Methodology)

१ બાળકોને વાર્તા કેવી રીતે કહીશું?, મૂળશંકર ભટ્ટ, પૃ. ૨૮, ઈ. ૧૯૨૮

प्रकृतमिदम् अध्ययनं वर्णनात्मकम् अनुसन्धानं, विशिष्टाध्ययनात्मकम् अनुसन्धानं च वर्त्तते।

## ❖ संस्कृतभाषायाः कथाव्यापः

भारतं तु कथासाहित्यस्य जन्मभूमिः अस्ति, अत एव "कथासाहित्यस्य आदिभूमिः" इति भारतं प्रसिद्धम् अस्ति। सम्पूर्णजगतः अधिकतमासु भाषासु संस्कृत-भाषायाः प्रभावः अस्ति इति सर्वविदम्।[२] एवमेव विविध-भाषासु यत् बालसाहित्यम् उपलभ्यते, तस्मिन् संस्कृतभाषायाः प्रभावः अस्त्येव। अद्यत्वे समग्रे विश्वे संस्कृतभाषायां रचितस्य पञ्चतन्त्रस्य २०० तः अधिकाः अनुवादाः प्राप्यन्ते।[३] यदि संस्कृते कश्चन विषयः श्लोक-माध्यमेन उपस्थापितः, तर्हि बहुत्र अनुद्यमानायां भाषायाम् अपि पद्य-माध्यमेन तस्य विषयस्य उपस्थापनं जातम् अस्ति। भारतवर्षे आङ्ग्लानाम् आगमनोत्तरं महत्तम-बालसाहित्यस्य रचना पाठशालायाः शिक्षणस्य लक्ष्यं साधयितुम् एव अभवत्। तत्र हिन्दी, बङ्गाली, गुजराती, कनडा, तमीळ् इत्यादयः भाषाः अन्तर्भवन्ति।

## ❖ भारतीयभाषायां बालसाहित्यस्य अनुवादाः

भारतवर्षस्य स्वातन्त्र्योत्तरम् एव हिन्दीभाषायाः बालसाहित्यक्षेत्रे अनुवादानां पुरवत् स्थितिः दृश्यते। यतो हि भारतीयायां शिक्षणपद्धत्यां राजभाषात्वेन हिन्द्याः समावेशः जातः आसीत्, एवञ्च सा अनिवार्या भाषा जाता। राज्यसर्वकाराः, केन्द्रसर्वकारः च हिन्दी-साहित्याय पर्याप्तमात्रायाम् अनुदानम् अयच्छत्। अतः हिन्दीभाषायां विविधानां साहित्यानां निर्माणे स्वाभाविकतया एव वेगः दृश्यते स्म। तस्मिन् साहित्ये बालेभ्यः निर्मितस्य साहित्यस्य आधिक्यम् आसीत्। यतो हि पाठशालासु हिन्द्याः प्राथमिकज्ञानं प्रदातुं पाठ्यपुस्कानाम् अतीव आवश्यकता आसीत्। तस्मिन् समये पञ्चतन्त्रकथाः, हितोपदेशकथाः, प्रह्लादचरितं, ध्रुवचरितं, हरिश्चन्द्रचरितम्

२ The Sanskrit language (in Norwegian). (http://bit.ly/1XNqBPh)

३ The Fables of Bidpai, Introduction

इत्यादृशानां संस्कृताख्यानानां, संस्कृतकथानां च बालभोग्योद्देशेन सह अनुवादः अभवत्। इ. १८७४ तः १९०० पर्यन्तं हिन्दीभायाः साहित्यस्य कालः भारतेन्दुः इति प्रसिद्धः। तस्मिन् काले येषां बालसाहित्यानां रचना जाता, तेषां पारम्परिक-रचना नाभवत्। अतः तस्मिन् साहित्ये मनोरञ्जनयुक्तः उपदेशः समाविष्टः दृश्यते। ततः हिन्दीभाषायाः बालसाहित्ये वैज्ञानिकानां पुस्तकानां प्रसिद्धिः अवर्धत। तत्प्रसिद्धेः कृते 'शिशु', 'नन्दन', 'बालभारती', 'पराग', 'बालविनोद', 'बालसखा' इत्यादीनां सामयिकानां अतीव महत्त्वपूर्णं योगदानम् आसीत्।

- **बङ्गभाषा** – इ. १८०२ तमे वर्षे 'बत्रीश सिंहासन' इति बङ्गानुवादः जातः। ततः १८०८ तमे वर्षे 'हितोपदेश' ग्रन्थस्य बङ्गभाषायाम् अनुवादः अभवत्। ततः १८४७ तमवर्षे ईश्वरचन्द्रः विद्यासागरः 'वेतालपञ्चविंशतिः'-ग्रन्थात् वेतालकथानां बङ्गभाषायां भाषान्तरम् अकरोत्। बङ्गभाषायां रवीन्द्रनाथ-ठाकुर-महोदयस्य योगदानम् अपि अद्वितीयम्। सः विविधप्रकारेण बङ्गबालसाहित्यं समृद्धम् अकरोत्। ठाकुरमार-झूली-ग्रन्थस्य रचयिता दक्षिणारञ्जन-मगोदयस्य बङ्गप्रदेशस्य स्थानीयकथानां सङ्ग्रहणं कृतवान् अस्ति।[४]

- **असमियाभाषा, उडियाभाषा च** – संस्कृतसाहित्यस्य पौराणिकानाम् आख्यानानाम् आधारेण असमियाभाषायां विविधस्य बालसाहित्यस्य निर्माणं आरब्धम्। हेम-सरस्वती-महोदयेन लिखितः "प्रहलाद चरित्र" नामकः संस्कृतात् असमियाभाषायाम् अनुदितः प्रप्रथमः ग्रन्थः प्राप्यते। एषः काव्यग्रन्थः अस्ति। केशव कोईली-महोदयः उडियाभाषायाः बालसाहित्यस्य अनुवादम् अकरोत्। सः कविः आसीत्, अतः पद्यमाध्यमेन एव तस्य अनुवादकार्यम् आसीत्। सः गीतात्मककवितायाः रचनाम् अकरोत्। तस्यां कवितायां हितोपदेशस्य साक्षात् प्रभावः दृश्यते।

- **कन्नडभाषा** – कन्नडभाषायां कथासाहित्यस्य बाहुल्यं विद्यते। कन्नडभाषायां संस्कृतभाषायाः अनुदिताः काश्चन कथाः उपलभ्यन्ते।

४ ભારતીય ભાષાઓમાં બાળસાહિત્ય, પૃ. ૧૬૪

एवञ्च तस्य अनुवादस्य आधारेण अनेकाः नवीनाः रचनाः जाताः। पञ्जे मङ्गेशराव, श्रीमती आर् कल्याणम्मा, शिवरा कारन्त इत्यादीनां कन्नडबालसाहित्यस्य विकासाय मुख्यतया उल्लेखः भवति। डॉ. कारन्त-महोदयेन रचितं 'बाळप्रपञ्च'-नामकं पुस्तकं बालविश्वकोषत्वेन प्रसिद्धम् अस्ति। तत् पुस्तकं बालकेषु विद्यान-विविधानां जिज्ञासानां, ज्ञानपीपासायाः च उपशमनं करोति।

- **मराठीभाषा** – १८२२ तमे वर्षे 'बोम्बे नेटिव एज्युकेशन् सोसाइटी'-संस्थायाः प्रयासेण अनेकेभ्यः संस्कृतग्रन्थेभ्यः मराठीभाषायाम् अनुवादिताः ग्रन्थाः रचिताः। तेषु ग्रन्थेषु मुख्यतया देशभक्तेः, नीतेः च कथानां बाहुल्यं भवति स्म। उक्तायाः संस्थायाः स्थापनायाः पूर्वमेव स्थापकैः १८१५ तमवर्षे वैजनाथशास्त्रिणा अनुदितौ 'पञ्चतन्त्रः', 'हितोपदेशः' च गन्थौ प्राकाशयतः। ततः १९०६ तमवर्षे 'आनन्द'-नामकस्य बालसामयिकस्य मराठीबालकेभ्यः आरम्भः जातः। बालसामयिकस्यास्य मुख्यसम्पादकः श्रीवासुदेवः गोविन्दः आप्टे-महोदयः आसीत्, यः स्वयं साहित्यकारः आसीत्। १९२० इ. पश्चात् मराठीबालसाहित्ये मौलिकानां रचनानाम्, अनुदितानां ग्रन्थानां च परिपाटिः आरब्धा।[५] ततः त्रिंशदधिकानि (३००) बालपुस्तकानि 'अरगडे-आणि-कुलकर्णी'-प्रकाशन-संस्थया प्रकाशितानि।[६]

- **नेपालीभाषा, सिन्धीभाषा च** – नेपालीभाषायाः संस्कृते गोरखाली इति नाम प्रसिद्धम् अस्ति। नेपालीभाषायाः प्राचीनतमः ग्रन्थः "भास्वाती" संस्कृतभाषायाः एव अनुदितः अस्ति। एतस्य ग्रन्थस्य अनुवादः १४०१ मध्ये अभवत् इति मन्यते।[७] एषः ग्रन्थः ज्योतिषशास्त्रसम्बद्धः अस्ति। १७७१ मध्ये शक्तिवल्लभ आर्याल-महोदयः महाभारतस्य विराटपर्वणः

५ हिन्दी बालसाहित्य – एक अध्ययन, डॉ. हरिकृष्ण देवसरे, इ. १९६९

६ ભારતીય ભાષાઓમાં બાળસાહિત્ય, પૃ. ૧૬૨

७ भारतीय भाषाएँ और हिन्दी अनुवाद समस्या – समाधान, ले. कैलाश चन्द्र भाटिया, प्र. वाणी प्रकाशन, पृ. ३१

अनुवादं नेपालीभाषायाम् अकरोत्। 'श्रेष्ठ साहित्यमाला' इति सिन्धीभाषायाम् अनुदितः बालभोग्यः ग्रन्थः अस्ति। सिन्धीभाषायाः बालसाहित्यम् एव न अपि तु पद्यसाहित्यं संस्कृतपद्येभ्यः एव प्रभावितं दरीदृश्यते।

- **गुजरातीभाषा** – गुजरातीबालसाहित्यं सामान्यतः द्वयोः भागयोः विभक्तं भवति। १) मध्यकालीन-बालसाहित्यम् (१८५० यावत्), २) अर्वाचीनकालीन-बालसाहित्यम् (१८५१ उत्तरम्) इति। मध्यकालस्य साहित्ये धर्मकथा, संसारकथा, नीतिकथा, दृष्टान्तकथा च संस्काराणां सिञ्चनाय, मनोरञ्जनाय च प्रयुक्ता आसीत्। तस्मिन् काले केवलं मौखिकतया कथानां प्रचलनम् आसीत्। जातककथाः, बृहत्कथा, कथासरित्सागरकथाः, तरङ्गवतीकथाः, तरङ्गलोलाकथाः, वसुदेव-हिण्डाकथाः, दशकुमारचरितकथाः, सिंहानसद्वात्रिंशतिकाकथाः, वैताल-पञ्चविशंतीकथाः, शुकसप्ततीकथाः, पञ्चतन्त्रकथाः, हितोपदेशकथाः, भोजप्रबन्धकथाः च तासां कथानां स्रोतः आसीत्।

मलयालमभाषायाः, पञ्जाबीभाषायाः, काश्मीरीभाषायाः, तेलुगुभाषायाः च बालसाहित्यस्य विकासः अतीव विलम्बेन अभवत्। परन्तु तासु अधिकतम-भाषासु भारतस्य स्वातन्त्र्योत्तरमेव बालसाहित्यस्य क्षेत्रे विकासः जातः। तस्य विकासस्य मुख्यः आधारः पञ्चतन्त्रं, हितोपदेशः, पौराणिककथाः च एव परिगणनीयाः। तदनुवादे कृते सत्येव अन्यभारतीय-भाषासु बालसाहित्यं विपुलातां प्रापत्।

### ❖ वैदेशिकबालसाहित्ये संस्कृतसाहित्यस्य प्रभावः

भारतात् बहिः यत्किमपि बालसाहित्यं प्राप्यते, तस्य मूले तु संस्कृतभाषायाः पञ्चतन्त्रग्रन्थः एव अस्ति। ततोऽधिकं जातककथाः अपि तेषां बालसाहित्यस्य आधारः अस्ति। पञ्चन्तत्रस्य क्रमशः अनेकभाषासु अनुवादः अभवत्। न तावदेव पञ्चतन्त्रस्य अनुवादात् अपि अनेके अनुवादाः जाताः। एवं सम्पूर्णे विश्वे निर्मितेषु बालसाहित्येषु संस्कृतस्य पद्यसाहित्यस्य प्रभावः दरीदृश्यते। पञ्चतन्त्रस्य प्रप्रथमवैदेशिक-भाषायाम् अनुवादः पहलवी-भाषायाम् अभवत्। ततः सम्पूर्णे विश्वे तासां कथानां क्रमशः अनुवादः जातः।

अर्थात्, संस्कृतपद्यानाम् आधारेण आविश्वं स्वबालसाहित्याय पद्यानां निर्माणम् अकरोत्।

## ➢ पहलवी-भाषानुवादः

पहलवी-भाषायां पञ्चतन्त्रस्य प्रप्रथमवारं अनुवादः अभवत्। प्राचीनफारसीभाषात्वेन पहलवी-भाषा प्रसिद्धा। संस्कृतात् सा प्राचीनफारसीभाषा प्रभाविता आसीत्। पहलवी-भाषायां यः अनुवादः अभवत्, तस्य किंवदन्ती श्रूयते। 'शाह खुसरो' इत्येषः ईरान-देशस्य राजा (५३१-५७९)। सः 'खुसरो प्रथम', 'अनूशीरवाँ' इत्यपि प्रसिद्धः। सः ईरानदेशस्य राजा कुत्रचिद् पठितवान् यत्, भारतदेशस्य कस्मिंश्चित् पर्वते किमपि औषधम् उपलभ्यते। तस्य ओषधस्य सेवनेन मृतः जनः अपि जीवितः भवति इति। अतः सः राजा 'बजीर बुर्जुए'-नामकं राजवैद्यम् औषधम् आनेतुं भारतं प्रैषयत्। सः वैद्यः भारतदेशस्य विभिन्न-पर्वतेषु अटिवान्। परन्तु सः अन्वेषणकार्ये विफलः जातः। अन्ते सः कञ्चन भारतीयविद्वांसं तस्य औषधस्य विषये अपृच्छत्। सः विद्वान् उक्तवान् यद्, भवान् सुष्ठु श्रुतवान्। विद्वान् एव पर्वतरूपः, यस्मिन् ज्ञानरूपिणी सञ्जीवनी विकसते। तस्याः सञ्जीवन्याः सेवनेन एव अज्ञानी, मूर्खः च नूतनं जीवनं प्राप्नोति। सा सञ्जीवनी एव 'पञ्चतन्त्रम्' इति।

पञ्चतन्त्रस्य मातृकाग्रन्थं स्वीकृत्य 'बुर्जुए'-महोदयः ईरानदेशं प्रत्यगच्छत्। ईरानदेशस्य राज्ञः आज्ञानुसारं सः पञ्चतन्त्रस्य पहलवीभाषायाम् अनुवादम् अकरोत्। ईरान्-राजः पञ्चतन्त्रस्य कथाः श्रुत्वा अतीव प्रफुल्लितः जातः। पञ्चतन्त्रस्य अनुदितायै मातृकायै सः विशेषं कक्षं निर्मापितवान्। पञ्चतन्त्रस्य प्रप्रथमवारम् अनुवादः पहलवी-भाषायाम् एव अभवत्। ततः पञ्चतन्त्रस्य अनेके अनुवादकाः जाताः।

## ➢ सीरियाई-अरबी-यूनानी-'रूसी'-'स्लावा'-भाषानुवादः

पहलवी-भाषायाः अनन्तरं पञ्चतन्त्रस्य प्रप्रथमः अनुवादः सीरियाई-भाषायां जातः। जर्मनदेशस्य विदुषां मतानुसारं ५७० ई. मध्ये पहलवी-तः

सीरियाई-भाषायां पञ्चतन्त्रस्य अनुवादः जातः।[८] इब्न्-उल्-मुकफ्फा-नामकः अनुवादकः पहलवी-भाषायाः पञ्चन्तस्य द्वितीयम् अनुवादं कदाचित् द्विशतं वर्षानन्तरम् अरबी-भाषायाम् अकरोत्। करटक-दमनकयोः नाम्ना मुकफ्फा-महोदयः स्वानुदितस्य पञ्चतन्त्रस्य 'कलीला-व-दिमना' इति नामकरणम् अकरोत्। एकादशेऽब्दे अरबी-भाषायाः पञ्चतन्त्रस्य अनुवादः यूनानी-भाषायां जातः। यूरोप-देशस्य भाषासु एषः प्रप्रथमः पञ्चतन्त्रस्य अनुवादः। यूनानी-भाषायाः अनुवादोत्तरं विभिन्नासु यूरोपदेशस्य भाषासु पञ्चतन्त्रस्य अनुवादः अतीव स्पर्धात्मकः अभवत्। पञ्चतन्त्रस्य यूनानी-भाषानुवादात् रूसी-भाषायां, स्लावा-भाषायां च अनेके अनुवादाः जाताः। पश्चिमीयस्य यूरोप-देशस्य अनेके भषाविदः रूसी-स्लावा-भाषयोः पञ्चतन्त्रानुवादात् प्रभाविताः। अतः क्रमेण इतालवी-लैटिन्-जर्मन-भाषासु पञ्चतन्त्रस्य अनुवादः आरब्धः। एवं युरोप-देशस्य विविधासु भाषासु वेगेन पञ्चतन्त्रस्य अनुवादकार्यं जातम्। ततः सम्पूर्णे विश्वे प्रप्रथमवारं बालसाहित्यस्य विधिवत् स्थापना जाता।

➢ **'हिब्रू'-'स्पैनिश'-'लैटिन'-'जर्मन'-भाषानुवादः**

त्रयोदशेऽब्दे अरबी-भाषायाः पञ्चतन्त्रस्य प्राचीनस्पैनिश-भाषायाम् अनुवादः जातः। परन्तु तस्माद् अनुवादात् पूर्वमेव कश्चन अज्ञात-कविः पञ्चतन्त्रस्य अरबीभाषा-तः हिब्रू-भाषायाम् अनुवादम् अकरोत्। पञ्चतन्त्रस्य हिब्रू-भाषानुवादः अतीव महत्त्वपूर्णः मन्यते। यतो हि तस्यानुवादस्य अनन्तरमेव सर्वेषां ज्ञानम् अभवत् यद्, लैटिनभाषायामपि पञ्चतन्त्रानुवादः विद्यते इति। १२६० तमदशके कपुआ-नगरीयः जॉन्-नामकः यहूदी-जनः लैटिन-भाषायां पञ्चतन्त्रानुवदं कृतवान्। सः अवादः 'कलीला व दिमना मानवजीवनज्ञानकोषः' इति प्रसिद्धः। १४८० तमदशके लैटिनभाषायाः पञ्चतन्त्रानुवादः जर्मनभाषायां जातः। तस्यानुवादे लोके प्रिये जाते सति

८ Kalilah and Dimnah; or, The fables of Bidpai; being an account of their literary history, Introduction, p. xiv

तस्मात् जर्मनभाषानुवादादेव हॉलैण्ड-डेनमार्क्-आइसलैण्ड-देशानां भाषासु पञ्चतन्त्रानुवादः जातः।[९]

### ➢ फारसी-तूर्की-फ्रांसीसी-भाषानुवादः

अरबी-तः 'कलीला व दिमना'नामकानुवादात् पञ्चतन्त्रस्य फारसी-अनुवादः जातः। षोडशेऽब्दे 'अनवार सुलेही'नामक-पञ्चतन्त्रानुवादात् तूर्की-भाषायाः 'हुमायूनामा'-नामकः पञ्चतन्त्रानुवादः अभवत्। १६४४ तमवर्षे फारसी-तः 'अनवरी सुहेली'-नामकात् अनुवादादेव पञ्चतन्त्रस्य 'पिलपई'-नामकः फ्रेञ्च-अनुवादः जातः। पिलपई-महोदयस्य कथाः इत्येव सः अनुवादः प्रसिद्धः।[१०]

### ➢ आङ्ग्लानुवादाः

आङ्ग्लभाषायां १८५४ तमवर्षे ईस्ट विक्-नामकेन विदुषा कृतः अनुवादः, १८७७ तमवर्षे वॉस्टन्-नामकेन विदुषा कृतः अनुवादः च प्रकाशितौ। तयोः उभयोः अनुवादयोः नाम 'लोइट्स् ओफ कैनोपस्' इति आसीत्। विंशतिशताब्द्याम् द्वौ अनुवादौ प्रकाशितौ। १९२४, १९२५ वर्षे तयोः कर्तारौ क्रमेण स्टैनली राईस्-महोदयः, आर्थर् डब्ल्यू राइडर्-महोदयः च।[११] अत्र वैशिष्ट्यम् अस्ति यत्, यथा पञ्चतन्त्रे पद्यस्य, गद्यस्य च प्रयोगः वर्तते, तथैव आर्थर्-महोदयेन आङ्ग्लानुवादः पद्यात्मकः, गद्यात्मकः च वर्तते। अर्थात्. आङ्ग्लभाषायाः पद्यसाहित्ये संस्कृतपद्यसाहित्यस्य प्रभावः प्रत्यक्षः भवति।

---

९ History of the Migration of Panchatantra, Vijay Bedekar, Institute for Oriental Study, Thane, Saturday, the 27th December 2008

१० Tales Within Tales – adapted from the fables of Pilpai पुस्तकनाम्ना एव ज्ञायते

११ Harvard Oriental Series. Department of Sanskrit and Indian Studies, Harvard University, 2009

- **अन्ये अनुवादाः**

ब्रूती-नामकः विद्वान् १६५४ तमवर्षे स्पेनीशभाषायां पञ्चतन्त्रानुवादम् अकरोत्। तूर्की-अनुवादात् (हुमायुनामा) फ्रेञ्चभाषायां १७२४ तमवर्षे अनुवादः जातः। फ्रेञ्चभाषायाः अनुवादः 'बिदपई'-नाम्ना प्रसिद्धः।[१२] [१३] वाइल्ट-महोदयस्य १७४५ तमवर्षे स्वीडिश-अनुवादः, १७४५ तमवर्षे एव अज्ञातेन कविना जर्मन-अनुवादः प्रकाशितः। १७६२ तमवर्षे यूबेंस्-महोदयस्य स्वीडिश-अनुवादः उपलभ्यते। १७७० तमवर्षे पोलिश-अनुवादः केनापि अज्ञातकविना कृतः। १७८१ तमे वर्षे स्पोंडेल-भाषातः डच-भाषायाम् अपि पञ्चतन्त्रस्य अनुवादः प्रकाशितः। १७८१ तमे वर्षे हंगापियाई-भाषायां, यूनानी-भाषायां च पञ्चतन्त्रानुवादः जातः।

- **शोधनिष्कर्षः (Conclusion)**

पञ्चतन्त्रग्रन्थस्य अनुवादस्य परम्परा क्रमेण पहलवी, अरबी, हिब्रू, लैटिन्, इटालवी, आङ्गलभाषां यावत् विस्तृता दरीदृश्यते। सम्प्रति अपि एतस्य ग्रन्थस्य अनुवादस्य परम्परा प्रचलति। कदाचित् अद्यापि विश्वस्य कस्मिँश्चित् भागे कोऽपि अनुवादकः, लेखकः, सम्पादकः वा पञ्चतन्त्रग्रन्थस्यस्य नवीनप्रौद्योगिक्याः उपयोगेन प्रकाशनाय तत्परः स्यात्। पञ्चतन्त्रग्रन्थस्य अभारतीयाभाषासु साक्षात् अनुवादः जातः। पहलीभाषायाः अनन्तरं थियोराडो-जर्मनविदुषः जर्मनभाषानुवादः साक्षात् संस्कृतभाषायाः जातः। पञ्चतन्त्रस्य अनुवादेभ्यः अनुवादाः बहुधा जाताः, तेभ्यः अनुवादेभ्यः प्रेरिताः जनाः स्वस्य साहित्यस्य रचनाम् अपि अकुर्वन्, अतः वैश्विकस्तरे बालसाहित्यस्य मूलस्रोतः तु संस्कृतभाषा एव स्वीकरणीया भवति।

*****

१२ The Fables of Pilpay, Introduction

१३ A Curriculum for English, Page – 109 (https://archive.org/stream/ERIC_ED013810#page/n128/mode/1up/search/bidpai)